સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ॥

श्रीजानकीवल्लभो विजयतेतराम् ।

श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# काठकोपनिषद्

ॐ सह नाववतु । सह नौ भुनक्तु सह वीर्यं करवाव है । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

कविरपि यस्य कृपातः प्रातः स्मरणीयतां यातः ।
नातः परमवलम्बे ध्यातः सद्यः श्रिये सोऽस्तु ॥१॥

आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ॥२॥

सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यं गुरुं नमाम्यहम् ॥३॥

कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
कठोपनिषदश्चात्र भाष्यमानन्दसंज्ञकम् ॥४॥

सर्वेश्वरस्य परमपुरुषस्य उपेयस्य, तदुपेतुर्मुक्तजीवस्य परमपुरुषोपासनरूपस्य उपायस्य च स्वरूपमुपदिदिक्षुराचार्यः सुखावगमाय गुरुशिष्यसम्वादगर्भितामाख्यायिकामुपक्रामति—

उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ ।
तस्य ह नचिकेता नाम पुत्र आस ॥१॥

अत्र ह वै इति निपातद्वयं भूतपूर्वार्थस्मृत्यर्थं, तेन आख्यायिकागतोऽर्थः न कल्पितः, किन्तु वस्तुभूत इति

द्योत्यते । उशन् कामयमानः । फलमिति कर्माध्याहार्यम्-वश्कान्तौ इति धातोः शत्रन्तस्य रूपम् । वाजश्रवसः, वाजेन अन्नेन दानादिकर्मणा श्रवः कीर्तिर्यस्य स वाजश्रवाः, रूढिर्वा वाजश्रवाः इति, तस्यापत्यं पुमान् वाजश्रवसः, वाजश्रवस इत्येव वा रूढं नाम । एतदभिधानः कश्चित् ऋषि सर्वस्वदक्षिणं विश्वजित् नामकं यागं कृतवान् तत्र नियुक्तेभ्यो याज्ञिकेभ्यः यज्ञसभायामुपस्थितेभ्योऽन्येभ्यो ब्राह्मणेभ्यश्च सर्ववेदस सर्वस्वं ददौ दक्षिणारूपेण दत्तवान् । तस्य यजमानस्य वाजश्रवसस्य ऋषेः नचिकेता इति प्रसिद्धनामा पुत्रः आस बभूव । छन्दस्युभयथेति सूत्रेण अस्तेः पाक्षिको थेभूभावो न ॥१॥

तं ह कुमारं सन्तं दक्षिणासु नीयमानासु
श्रद्धाऽऽविवेश सोऽमन्यत ॥२॥

तम् नचिकेतसं कुमारं प्रथमवयस्कं बालमेव सन्तम् दक्षिणासु ऋत्विग्भ्योऽपरेभ्यश्च दक्षिणारूपासु गोषु नीयमानासु अस्य कृते एतावत्यो गावः दक्षिणेत्येवं विभज्य दीयमानासु पितुः फलैषिणः कामः नैतासां दानेन सिद्धयेत् इति मद्दानेनापि स सिद्धयतु इत्येवं हितकामनाप्रयुक्ता श्रद्धा आस्तिक्यबुद्धिः आविवेश प्रविष्टा, ततो जातश्रद्धः स नचिकेता अमन्यत, मननं कृतवान्, विचारितवानित्यर्थः । अत्र दक्षिणासु इति बहुवचनमनुपपन्नम आनतिकरद्रव्यरूपायाः दक्षिणायाः एकत्र क्रतौ एकस्या एव भावात्-एकवचनान्ततायां एवौचित्यात्-इति तु न शंक्यम् ऋत्वपेक्षया दक्षिणाया एकत्वेऽपि ऋत्विक्सदस्यादिदक्षिणोद्देश्यभेदात् दक्षिणाभेदसंभवात् तस्यैव चात्र विवक्षितत्वात् बहुवचनोपपत्तेः ॥२॥

स किममन्यतेत्याकाङ्क्षायामाह--

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥३॥

पीतमुदकं याभिस्ता पीतोदकाः जग्धं तृणं याभिस्ताः जग्धतृणाः, दुग्धो दोहः क्षीररूपः यासां ता. दुग्धदोहाः, दानात् पूर्वकालपर्यन्तं यावत् पानीयं पीतम् तावत्पीतमेव दानानन्तरं तु पानीयमपि पातुमसमर्थाः, यावत् तृणं दानपूर्वकाल भक्षित ततः परम् तृणमप्यत्तुमसमर्थाः, क्षीराख्यो दोहश्च यासां यो दुग्धः स दुग्धः नातः पर यासां दोहः शक्यः दोग्धुम् दुग्धदानासमर्थाश्चेत्यर्थः। निर्गतं प्रजननसामर्थ्यहीनं जातमिन्द्रियं जननेन्द्रियं यासां ताः निरिन्द्रियाः वत्सोत्पादनासमर्थाः, एतेन पायोरपि शक्तिहीनत्वं बोध्यतेऽनः शक्तिरहितपायुकतया द्रवीभूतसकृद्दानेऽपि लेपनादियोग्यगोमया दानाशक्ततया निष्फलत्वं प्रदर्शितम्। एवं भूताः या गावः ताः ददत् ऋत्विग्भ्यो दक्षिणारूपतया ददत् प्रयच्छन् यजमानः ते प्रसिद्धाः अनन्दा नाम लोकाः, नन्दयन्तीति नन्दाः न नन्दाः अनन्दाः असुखकराः लोकाः शास्त्रविदिताः सन्ति तान् स दक्षिणाबुद्धचं तादृशगोप्रदाता यजमानः गच्छति इति मननं कृतवान् इत्यर्थः ॥३॥

सहोवाच पितरं तात कस्मै मां दास्यसीति द्वितीयं
तृतीयं तं होवाच मृत्यवे त्वा ददामीति ॥४॥

स आस्तिक्यबुद्धियुक्तो नचिकेताः पूर्वोक्तविशेषणविशिष्टगोदक्षिणया क्रतुसाङ्गतां निन्दितलोकप्राप्तिरूपमनिष्टञ्च मन्यमानः आत्मप्रदानेनापि–पितुरिष्टसिद्धिरनिष्टनिवृत्तिश्च पुत्रेण मया करणीयैवेति निश्चित्य पितरम् जनकं वाजश्रवसम् उवाच उपगम्य प्रोक्तवान्– हे तात पितः कस्मै ऋत्विग्विशेषाय दक्षिणारूपेण मां पुत्रं पुन्नामनरकात्त्राणकरं दास्यसि प्रयच्छसीति, एवमुक्तेन पित्रा बालस्वभावादयमेवं वक्तीति समुपेक्ष्यमाणोऽपि स नचिकेताः द्वितीयं द्वितीयवारं तृतीयं तृतीयवारञ्च यदा कस्मै मां दास्यति कस्मै मां दास्यतीत्युवाच तदा नायं बालस्वभावात् वक्ति, किन्तु बुद्धिपूर्वकमेव वक्तीति ज्ञात्वा

निर्वेदमापन्नः क्रुद्धो वाजश्रवसः पिता मृत्यवे यमाय त्वा नचिकेतसं ददामि प्रयच्छामीति तं कुमारं नचिकेतसम् उवाच उक्तवान् हेति निश्चये ॥४॥

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
किंस्विद् यमस्य कर्त्तव्यं यन्मयाद्य करिष्यति ॥५॥

पित्रा कोपाविष्टतया मृत्यवे त्वा ददामीत्युक्तोऽपि नचिकेताः भयशोकादिरहितः सन् पितरमुक्तवान्—बहूनां यमस्य पार्श्वे गन्तॄणां जनानां मध्ये प्रथमः सर्वतोऽग्रे एमि गच्छामि अहमिति शेषः। अथवा बहूनां गन्तॄणां मध्ये मध्यमः सर्वतोऽग्रे गन्तुरनुयायी भूत्वा एमि गच्छामि, भयाद्याविष्टतया बहूनां पश्चात् गच्छामि अर्थात् तवाज्ञया यमगृह-गमनेऽपि न मे भयम् न वा कोऽपि विचारः इति तवाज्ञां पालयाम्येव परन्तु मम तत्र गमनेऽपि अद्य मया प्राप्तेनापि यत् कर्तव्यं प्रयोजनं स करिष्यति तत् यमस्य कर्तव्यं किंस्वित् किमस्ति यदि मया किमपि यमस्य कार्यं सेत्स्यति तदा तु याज्ञिकेभ्य इव यमायापि मम दानं ते सफल संभवि, परन्तु नैतत् पूर्णकामत्वात् यमस्य, बालस्वरूपेण मयाऽकिञ्चिकरेण किं तस्य। अतः प्रयोजनमनालोच्यैव क्रोधावेशात् मृत्यवेऽहं भवता दत्त इति अनुशोचामि ॥५॥

एवं भयक्रोधादिरहितं सौम्यं पुत्रस्य वचः श्रुत्वा पिता सत्यं क्रोधावेशादेव मयैवमुक्तम् नेदृशो गुणी पुत्रः मृत्यवे दातुमुचित इति पश्चात्तापं कुर्वाणं पितरं दृष्ट्वा कदाचिदयं पश्चात्तापयुक्तः यदि यमगृहगमनं मम निरुन्ध्यात् तदा प्रतिज्ञाऽपरिपालनपरिणामभूतमनिष्टं नरकादिरूपं पुनरस्योपतिष्ठेत् तन्न भवतु इति प्रतिज्ञापालनाय पितर-मुत्साहयति—नचिकेताः—अनुपश्येति ।

अनुपश्य यथा पूर्वे प्रतिपश्य तथापरे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥६॥

हे पितः पूर्वे पूर्वकालीनाः पितामहादयः यथा येन प्रकारेण मृषावचनं विनैव सत्यवचने प्रतिज्ञातपरिपालने च स्थिताः तथा अनुपश्य क्रमेण आलोचय तदनुसारेण त्वमपि वर्तस्व, अपरे अर्वाचीनाः सज्जना अपि स्वधर्मे सत्यवचनादौ स्थिताः यथा सन्ति तथा प्रतिपश्य विचारय विचार्य पूर्वापरसत्पुरुषवृत्तान्तं त्वमपि तथाऽऽचर यमगेहप्रेषणान्मां नावरुन्धत्स्व, यतः मर्त्यः मनुष्यः सस्यमिव धान्यमिव पच्यते स्वल्पेनैव समयेन जीर्णो भवति, म्रियते च मृत्वा च पुनः सस्यमिव आजायते समन्तादुत्पद्यते अतोऽनित्येऽत्र जीवलोके स्वल्पकालीनसुखाय न मृषा करणीयम् प्रतिज्ञातं सत्यं कुरु मृत्युगृहाय मां प्रेषय, द्रुतमिति तात्पर्यम् ॥६॥

एवं प्रेरितेन पित्रा यमसदनाय प्रेषितः नचिकेताः मृत्यौ ब्रह्म-सदनं प्रति गते सति यमभवनं जगाम । तत्र चाभुञ्जान एव किमपि तिस्रो रात्रीः वासेन व्यगमयत् प्रोष्य च स्वभवनमागतं वृद्धाः द्वारपाला ऊचुः—

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥७॥

ब्राह्मणो विप्रः अतिथिरभ्यागतः सन् वैश्वानरः साक्षात् वह्निरेव गृहान् प्रविशति, आगच्छति अतः तत्कृतदाहोपशमाय साधवः तस्यातिथि-रूपस्याग्नेः एतां पाद्यादिदानरूपां शान्तिं कुर्वन्ति समाचरन्ति । अन्यथा प्रत्यवायापातात् । अतः हे वैवस्वत विवस्वतो रवेरपत्य यम उदकम् पाद्यार्थं जलम् उपलक्षणमिदमासनादेरपि हर आनय नचिकेतसे इत्यर्थः ॥७॥

पादोदकाद्यनाहरणे कः प्रत्यवाय इत्याकांक्षां प्रत्यवायं द्वारपालाः बोधयन्ति वैवस्वताय-आशाप्रतीक्ष इति—

आशाप्रतीक्षे संगतं सूनृतां चेष्टापूर्त्ते पुत्रपशूंश्च सर्वान् ।
एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥८॥

आशा च प्रतीक्षा च आशाप्रतीक्षे स्वेष्टभाविवस्तुप्राप्तीच्छा आशा, स्वेष्टवर्तमानवस्तुप्राप्तीच्छा प्रतीक्षा। संगतम् सत्पुरुषसंगतिम्, तज्जन्यं फल वा ! सूनृताम् प्रियां वाचम्, तस्या निमित्तं वा यतो प्रियवाक् प्राप्यते। इष्टापूर्तं इष्टञ्च पूर्तं च इष्टापूर्ते, पृषोदरादित्वात् इष्टशब्दस्य समासे दीर्घत्वम्। इष्टं यागादि तज्जन्यं फल वा पूर्त्तं खातम् वापीकूपतडागादि, तज्जन्यं फलं वा। पुत्रान् पशूंश्च सर्वान् एतत् अतिथिरूपब्राह्मणस्य अनशन तज्जन्यं पाप वा कर्तृ वृङ्क्ते अपवर्जयति विनाशयति, कस्येत्याकाङ्क्षयामाहुः यस्य अल्पमेधसः अल्पप्रज्ञस्य पुरुषस्य गृहे अनश्नन् अभुञ्जानो ब्राह्मणो वसति तस्येत्यर्थः। अतः कस्यामप्यवस्थायां ब्राह्मणोऽतिथिर्नोपेक्ष्यः, किन्तु सत्करणीय एव वैवस्वत त्व तु-स्वस्थावस्थ एवेति ब्राह्मणायास्मै पाद्यादिकं शीघ्रमुपनयेति भावः। एवं द्वारपालैर्वृद्धैरुक्तो मृत्युः पाद्यादिकं नचिकेतसे समुपहृत्य तमुवाच तिस्र इति--

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥९॥

तिस्रो रात्रीः त्रिरात्रिसमकालपर्यन्तम् यत् यस्मात् हेतो. मे मम यमस्य गृहे हे ब्रह्मन् हे विप्र ! नमस्यः नमस्कारार्हः अतिथिरभ्यागतो भूत्वा अनश्नन् अभुञ्जान एव अवात्सीः वासं कृतवानसि। अतः ते तुभ्यं नमस्कारयोग्यायातिथये ब्राह्मणाय नमः नमस्कारोऽस्तु। मे मम मृत्योः स्वस्ति अस्तु, भद्रमस्तु तस्मात् त्वत्पूजाद्यकरणनिमित्तः प्रत्यवायो मा भवतु—इत्येतदर्थम् अनशनेन मद्गृहे गमिताः तिस्रो रात्रीः प्रति ताः रात्रीः समुद्दिश्य त्रीन् वरान् अभीष्टार्थविशेषान् वृणीस्व याचस्व मत्सकाशात्। यद्यपि ब्राह्मणस्य ते कदाचिद् वराभीप्सा न भवेत्

तथापि मय्यनुग्रहसम्पादनाय वरत्रयवमश्यं प्रार्थयस्वेति भावः ॥९॥

एवं यमेनाभ्यर्थितो नचिकेताः आह–शान्तसंकल्प इति ।

शान्तसङ्कल्पः सुमना यथा स्याद् वीतमन्युर्गौतमो माभिमृत्यो । त्वत्प्रसृष्टं माभिवदेत् प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥१०॥

हे मृत्यो यम गौतमः एतन्नामा मत्पिता शान्तसंकल्पः शान्तः निवृत्तिं गतः संकल्पः मम पुत्रो यमं प्राप्य किन्नु करिष्यतीति भावनारूपः यस्य तादृशचिन्तारहितः यथा स्यात् । एवं सुमनाः प्रसन्नचित्तः मत्प्रेषणप्रयुक्तखेदरहितत्वात् स्वस्थमनाः यथा स्यात् । मा अभि मां प्रति वीतमन्युः विगतक्रोधश्च यथा स्यात् । तथा कुरु इति शेषः । किञ्च त्वत्प्रसृष्टम् त्वया गृहं प्रति प्रेषितं मा माम् अभि प्रति प्रतीतः सन् स एवायं मम पुत्रः यो यमगृहं प्रति मया प्रेषितः इत्येवं प्रत्यभिज्ञावान् विश्वस्तः सन्निति भावः । वदेत् पूर्ववत् अभिभाषेत । यद्वा अभिवदेत् आशिषा युञ्ज्यात् । एतत् एतत्प्रयोजनकं त्रयाणां वराणां त्वद्दत्तानां मध्ये प्रथमं वरं वृणे प्रार्थये ॥१०॥

एवं नचिकेतसा प्रार्थितो मृत्युः प्रत्याह––

यथा पुरस्तात् भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात्प्रमुक्तम् ॥११॥

पुरस्तात् मद्गृहागमनात् पूर्वस्मिन् काले यथा यादृशप्रीतिसमन्वितबुद्धिमान् त्वयि आसीत् तथैव मम गृहात् स्वगृहं प्रति गतेऽपि

त्वयि प्रीतिसमन्वितबुद्धिमान् भविता भविष्यति। प्रतीतः स एवायं मदीयः प्रियः पुत्रः इति प्रत्यभिज्ञावान् सन्। औद्दालकिः उद्दालक एव औद्दालकिः। आरुणिः अरुणस्यापत्यं पुमान् अरुणपुत्रः। द्वयोर्वा अपत्यम्। अरुणस्य अपत्यम् उद्दालकस्य गोत्रापत्य वा आरुणिः औद्दालकिः तव पितेत्यर्थः। मत्प्रसृष्टः मया अनुगृहीतः सन् सुखं सुखपूर्वकं चिन्तारहितत्वात् वीतमन्युः त्वयि विगतक्रोधः सन् रात्रीः त्वद्गमनोत्तरभाविरात्रीः शयिता स्वप्ता। मृत्युमुखात् मृत्युगोचरात् प्रमुक्तं परावृत्तं त्वां दर्शिवान् दृष्टवान् सन्। मदनुग्रहवशात् प्रथमवरेण याचितं सर्वं प्रयोजनं पितुः परितोषकारकं ते सेत्स्यतीति भावः॥ दर्शिवान् इत्यत्र दृश्धातोः क्वसुः। द्विर्वचनं तु छान्दसत्वान्नेति बोध्यम्॥११॥

**स्वर्गे लोके न भयं किञ्च नास्ति न तत्र त्वं न जरया बिभेति। उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके॥१२॥**

अतः परेण मंत्रेण द्वितीयं वरं प्रार्थयितुकामो नचिकेताः प्रार्थनाविषयाग्निविद्याफलभूतं स्वर्गमनेन मंत्रेण प्रशंसति। स्वर्गे, इति अत्र प्रकरणे बहुकृत्वोऽभ्यस्तः स्वर्गशब्दः स सर्वोऽपि मोक्षस्थानभूताऽप्राकृतलोकपर एव स्वर्गे लोके न भयं किञ्चनास्तीतिमंत्रेण मुक्तपुरुषाऽसाधारणस्य अपहत पाप्मत्वादिकस्य गुणाष्टकस्य बोधनात् "ध्रुवसूर्यान्तर यत्तु नियुतानि चतुर्दश। स्वर्गलोकः स कथितः लोकसंस्थानचिन्तकैः" इति पुराणप्रतिपादितस्वर्गलोकगतानां संसारिणामपहत पाप्मत्वादिरूपगुणाष्टकाविर्भावस्य कुत्राप्यश्रवणात्। अत्र च मंत्रे "न भयं किञ्चनास्तीत्यनेन अपहृतपाप्मत्वम्। "न तत्वम्" इत्यनेन विमृत्युत्वम् "नजरयेत्यंशेन विजरत्वम् "उभे तीर्त्वाऽशनायापिपासे" इत्यनेन विजिघत्सत्वमपिपासत्वञ्च प्रतिपाद्यते शोकातिग इत्यनेन विशोकत्वम्

बोध्यते मोदते स्वर्गलोके इत्यनेन च मोदकारणभूते सत्यकामत्वसत्य-संकल्पत्वे प्रतिपाद्येते तस्मादत्र स्वर्गशब्दः मोक्षस्थानवाची एव मन्तव्यः। न चान्यत्र कुत्रापि स्वर्गशब्दस्य मोक्षस्थानवाचकतया दृष्टत्वात्। एतस्मिन्नर्थे अप्रसिद्धेश्चेदृशार्थकल्पना नोपपद्यते इति शङ्कनीयम्। "अनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठन्ति के० ३४ "तेन धीरा अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ता" (बृ-४-४-८) तस्य हिरण्मयः कोशः स्वर्गो लोको ज्योतिसावृत अमुस्मिन् स्वर्गे लोके सर्वान् कामान्त्वाऽमृतः स महीपते इत्यादिश्रुतिषु स्वर्गशब्दस्य मोक्षस्थानवाचितयाऽनेकशो दृष्टत्वात्। स्वर्गकामाधिकरणे निरतिशयप्रीतिवाचिताया एव स्वर्गशब्दस्य निर्धारणात्। पुराणप्रतिपादितलोकविशेषस्य सातिशयप्रीतिमात्रेण स्वर्गशब्दवाच्यत्वस्यौपचारिकत्वात्, उपचारमात्रेण प्रसिद्धेश्चाकिञ्चित्करत्वात्। स्वर्गे लोके मोक्षस्थाने साकेताभिधे न किञ्चन भयमस्ति भयकारणस्य पुण्यपापसम्पर्कस्य विनष्टत्वेन कस्यापि भयस्य तत्र न संभव इत्यर्थ—एतेन पुण्यप्राप्यपौराणिकस्वर्गे ईन्द्रादेरपि वृत्रासुरादिजन्यभयस्य पुराणादेव अवगम्यत्वात् न तत्र भयसामान्याभाव इति सूच्यते। तस्मान् न स प्रसिद्धोऽपि अत्र प्रकरणे ग्रहणमर्हतीतिभावः। हे मृत्यो तत्र स्वर्गे मोक्षस्थाने त्वम् न न ईशिषे, तेवापि तत्र प्रभावोनास्ति। न जरया वृद्धावस्थया तत्र गतो-जीवो बिभेति, जरामरणादेः मुक्तिस्थानेऽसंभवात्। अशनाया पिपासे, अशितुमिच्छा अशनाया बुभुक्षा, पातुमिच्छा पिपसा जलादिकर्मकपान-विषयिणी इच्छा ते अपि तत्र न स्तः, शोकातिगः शोकं दुःखमतिगच्छति-तरति सः शोकातिगः शोकपारगामी स्वर्गलोके मोक्षस्थाने श्रीमद्भगवद्-रामचन्द्राधिष्ठिते साकेते गतो जीवः मोदते "यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते (छा० ८-१०) इत्यादि-श्रुत्या सत्यकामत्वसत्यसकल्पत्वाविर्भावबोधनात्। तेन च पितृलोका-दिगतसर्वविधमोदस्य संकल्पादेव प्राप्तत्वात् सर्वथा आनन्दी-भवतीत्यर्थः ॥१२॥

सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥१३॥

अनेन मन्त्रेण स्वर्गसाधनीभूताग्निविद्यामर्थयते द्वितीयवररूपां नचिकेताः । हे मृत्यो सः पुराणादिषु सर्वज्ञत्वेन रूपेण प्रसिद्धस्त्वम् । स्वर्ग्यम् उक्तलक्षणस्वर्गलोकप्राप्तिसाधनभूतम् । अग्निम् अग्निविद्याम् । अध्येषि स्मरसि जानासीति यावद् । तम् अग्निम् । श्रद्धधानाय उक्तलक्षणमोक्षश्रद्धाविशिष्टाय मह्यम् नचिकेतसे तव शिष्यभूताय । प्रब्रूहि प्रकर्षेण वद उपदिशेत्यर्थः । प्रोपसर्गेण तथा मामग्निमुपदिश येन सम्यगहं वेत्तुं शक्नुयामिति द्योत्यते । मोक्षसाधनत्वञ्चाग्नेरुपासनद्वारा भवतीत्यनुसंधेयम् । कस्मान्मां तदर्थं प्रेरयसीत्याकांक्षायामाह-स्वर्गलोकाः अमृतत्वं भजन्ते । स्वर्गः साकेताख्योऽप्राकृतो देशः लोको येषांते स्वर्गलोकाः परमं पदं प्राप्ताः । ये ते अमृतत्वम् स्वस्वरूपाविर्भावलक्षणं मोक्षम् । भजन्ते प्राप्नुवन्ति । अतः तत्र श्रद्धावानहं तदुपदेशाय त्वां प्रेरये इति भावः । एतत् मोक्षसाधनमग्निविज्ञानम् द्वितीयेन वरेण वृणे प्रार्थये ॥१३॥

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निन्नचिकेतः प्रजानन् । अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ॥१४॥

एव प्रार्थितो मृत्युः प्रतिजानाति हे नचिकेतः स्वर्ग्यं स्वर्गाय हितम् स्वर्गसाधनम् अग्निम् अग्निविद्याम् प्रजानन् प्रकर्षेण सम्यग्रूपेण जानन् ज्ञातवान् अहं ते तुभ्यं प्रब्रवीमि प्रकर्षेण कथयामि स्वप्रार्थितम् उ इति यदर्थे यत् तत् मे मम सकाशात् मदुपदेशात् निबोध जानीहि

एकाग्रचित्तः सन् । अनन्तलोकाप्तिम् न अन्तो यस्य सोऽनन्तः अविनाशी नित्यः स चासौ लोकः अनन्तलोकः साकेताभिधः तस्य आप्तिः प्राप्ति-साधनभूतम् कारण कार्योपचारात् । अथ किञ्च प्रतिष्ठाम् अत्रापि कारणे कार्योपचारात् तत्र गत्वा अपुनरावृत्तिस्वरूपप्रतिष्ठासाधनम् एतम् मया वक्ष्यमाणम् अग्निम् अग्निविद्याम् गुहायां निहितम् अति-गुप्तम् रहस्यभूतम् त्वं विद्धि जानीहि । नायं सर्वेषां कृते सुलभः, अहं तु त्वयि प्रीतिपरीतया रहस्यभूतम् समुपदिशामि तस्मात् सावधानमनाः शृणुस्वेति भावः । अथवा तत् त्वया पृष्टमग्निस्वरूपं ते तुभ्यमहं ब्रवीमि । त्वन्तु मे मदुपदेशात् तत् निबोध जानीहि । हे नचिकेतः प्रजानन् मदुप-देशात् स्वर्गसाधनमग्नि ज्ञातवान् त्वम् अनन्तलोकाप्तिम् पूर्वोक्त एवार्थः विद्धि लभस्व, अथ अनन्तरं प्रतिष्ठाम् उक्त एवार्थः त्र विद्धि लभस्वे-त्यर्थः । विदेर्लाभार्थकस्य विवक्षणात् ॥१४॥

लोकादिमग्निंतमुवाच तस्मै या
इष्टका यावतीर्वा यथा वा ।
स चापि तत् प्रत्यवदद् यथोक्त-
मथास्य मृत्युः पुनरेवाह तुष्टः ॥१५॥

इदन्तु श्रुतिवाक्यम् अस्मान् प्रतिबोधयितुम् । लोकस्य मोक्ष-स्थानरूपस्य साकेतस्य आप्तिम् उपासनाद्वारा प्राप्तिकारणभूतम् स्वर्ग्य-मिति यावत् । तम् नचिकेतसा प्रार्थितम अग्निम् अग्निविद्याम् । तस्मै नचिकेतसे । उवाच उपदिदेश मृत्युरित्यनुसधेयम् । याः यत्स्वरूपाः यादृश्यः इष्टकाः चेतव्याः उपधातव्या यावतीः संग्राह्याः । यत्संख्याकाः इष्टकाः चेतव्याः । यथा येन प्रकारेण वा चेतव्याः तत्सर्वमुवाचेत्यर्थः । यावतीरित्यत्र प्रथवाविभक्ते-रपि जसः सवर्णदीर्घः छान्दसत्वादिति ध्येयम् । स नचिकेता अपि तत् मृत्युना प्रोक्तम् । यथोक्तम् उक्तमनतिक्रम्य यथोक्तम्

यथा यमेन उक्तम् तथैव प्रत्यवदद् अनूदितवान् । अथ अनुवदनानन्तरम् शिष्यस्य ग्रहणधारणानुवचनसामर्थ्यपर्यालोचनेन तुष्टः प्रसन्नः मृत्युः वैवस्वतः पुनः भूय एव नचिकेतसम् आह उक्तवान् । प्रतिज्ञातवरत्रयादधिकमपरं वरं दातुं वक्ष्यमाणप्रकारेण अत्र मन्त्रे इष्टकापदेन सवत्सरमध्ये प्रातःकाले सायंकाले च प्रतिदिनमनुष्ठीयमानानि अग्निहोत्रकर्माणि एव विवक्षितानि । एतेषामग्निहोत्रकर्मणां विंशत्यधिकसप्तशतसंख्यावत्वात् अग्निविद्यायामिष्टकानामपि तावत्संख्यावत्वमेव । यथा शब्देन च ये ये मंत्राः इष्टका प्रकाशनसमर्थाः तत्तन्मन्त्रोच्चारपूर्वकम् मृत्युना अग्निविद्योपदिष्टा तत्तन्मन्त्रानपि सर्वानुच्चार्य नचिकेतसा अनूदितमिति भावः । इतोऽधिकन्तु चयनप्रकरणादवगन्तव्यम् ॥१५॥

तमब्रवीत् प्रीयमाणो महात्मा वरन्तवेहाद्य ददामि भूयः । तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥१६॥

प्रीयमाणः नचिकेतसः बुद्धिवैभवमवेक्ष्य संतुष्यन् महात्मा महत् विपुलमुदारं मनोयस्य तादृशः उदारचेता इत्यर्थः एवंभूतो मृत्युः तम् नचिकेतसं शिष्यम् अब्रवीत् उक्तवान् । किमित्यत्राह इह त्वयि प्रसन्नता निमित्तकम् । इहेत्यत्र सप्तम्याः निमित्तार्थकत्वाश्रयणम् । यतोऽहं त्वयि प्रसन्नः तत एवाधिकं वरं दातुमिच्छामिति भावः । भूयः पुनरपि अद्य इदानीम् एतेन प्रसन्नताया अतिशयो द्योत्यते तत एव विलम्बं क्षमते इत्याशयः । वरम् पूर्वप्रतिज्ञातवरत्रयापेक्षयाधिकं चतुर्थं वरं तव कृते ददामि प्रयच्छामि इति । कोऽसौ वर इत्यत्राह अयं मया समुपदिष्टः अग्निः तवैव नाम्ना नाचिकेतस इति संज्ञया भविता प्रसिद्धो भवेत् इति । अनेकरूपाम् अनेकानि नानाविधानि रूपाणि नीलपीतादीनि चाकचिक्यवन्ति यस्यां ताम् विचित्रवर्णाम् । इमां प्रत्यक्षां पुरःस्थिताम् ।

सृङ्काम् कर्णप्रियमधुरशब्दवतीं रत्नमालाम् गृहाण अङ्गीकुरुष्वेत्यर्थः ॥१६॥
पुनरपि मृत्युः कर्म स्तुवन्नाह—

त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञन्देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्त-
मेति ॥१७॥

त्रिकर्मकृत् त्रीणि त्रिसंख्याकानि कर्माणि इज्याध्ययनदान-रूपाणि करोतीति त्रिकर्मकृत् तत्र इज्या ज्योतिष्टोमादियागरूपा, अध्ययनम् गुरुमुखोच्चारितानां वेदानामनूच्चारणरूपम् "स्वाध्यायोऽ-ध्येतव्य इति विधिश्रवणात् । दानम् बहिर्वेदिपात्रपुरुषाय वस्तु-समर्पणरूपम् । यद्वा पाकयज्ञ, हविर्यज्ञसोमयज्ञकृत् इत्यर्थः । त्रिणाचिकेतः त्रिकृत्वः नाचिकेतोऽग्निः चितो येन तादृशः त्रिभिः चितैरग्निभिः संधिम् परमात्मोपासनेन सह सम्बन्धम् । एत्य प्राप्य जन्ममृत्यू जननमरण तरति अतिक्रामति परमात्मोपासनाऽनुष्ठितोऽयं नाचिकेतोग्निरपवर्गाय प्रभवतीत्यर्थः । द्वारभूत परमात्मोपासनस्वरूपं निर्दिशति ब्रह्मजज्ञम् सकलजगतकारणात् ब्रह्मणो जातः ब्रह्मजः, जानातीतिज्ञः, ब्रह्मजश्चासौ ज्ञश्च सः जीवः तम् ईड्यम् स्तुत्यर्हम् सर्वतो दीप्यमानम् परमात्मानं विदित्वा जीवात्मानं परमात्मात्मक मत्वेत्यर्थः । यद्वा ब्रह्मजज्ञं जीवात्मानं देवं परमात्मानं च विदित्वा शास्त्रतो गुरुपदेशतो वा विज्ञाय । निचाय्य ध्यानादिना साक्षात्कृत्य इमां स्वीयबुद्धिसन्निहितां शान्तिम् अत्यन्तमेति संसाररूपानर्थनिवृत्त्यात्मिकाम् आत्यान्तिकी शान्ति प्राप्नोति । अत्र मंत्रे ब्रह्मजज्ञं देवं विदित्वेति सामानाधिकरण्यनिर्देशात् जीवब्रह्मणोरभेदः प्रतीयते स चात्यन्तमसंभवी तस्माद् देवशब्दस्य परमात्मात्मकता-श्रयणात् सामानाधिकरण्यनिर्देशः सुसंगमनीयः ॥१७॥

**त्रिणाचिकेतः त्रयमेतद् विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥**

यः उपासकः । एतत्त्रयम् ब्रह्मजज्ञं देवमित्यनेन प्रोक्तं ब्रह्मस्वरूपम् ब्रह्मात्मकजीवस्वरूपम् । त्रिभिरेत्य संधिमित्यनेन निर्दशितमग्निस्वरूपं चेति त्रित्रयम् । विदित्वा गुरुपदेशात् शास्त्राद्वा विज्ञाय । एवं विद्वान् गुरूक्तप्रकारेण शास्त्रादर्शितप्रकारेण वा अग्नि, ब्रह्म, तदात्मक जीवश्वरूपसमनुसंधानवान् । नाचिकेतम् एतन्नाम्ना यमराजवरप्रयितं मग्निचिनुते अनुतिष्ठति । सः नाचिकेतः त्रिवारं चितनाचिकेताग्निरूपासकः । पुरतः शरीरपातात् प्रागेव जीवद्दशायामेव । मृत्युपाशान् मृत्योः यमस्य पाशाः बन्धनरज्जुभूताः ये रागद्वेषादयः क्लेशपदाभिधेयाः तान् । प्रणोद्य विगमय्य दूरेकृत्वेत्यर्थः । शोकातिगः शोकमतिगच्छतीति शोकातिगः जोकानिक्रमं कृत्वा । स्वर्गलोके निरनिशयसुखविशिष्टे स्थाने साकेताख्ये मोक्षस्थाने इत्यर्थः । मोदते सत्यकामत्वसत्यसंकल्पत्वाद्याविर्भावात् ईप्सितमानन्दं लमते ॥१८॥

**यो वाऽप्येतां ब्रह्मजज्ञात्मभूतां**
**चितिं विदित्वा चिनुते नाचिकेतम् ।**
**स एव भूत्वा ब्रह्मजज्ञात्मभूतः**
**करोति तद्‌येन पुनर्न जायते ॥१९॥**

यः उपासकः एतां पूर्वप्रोक्ताम चितिम् चयनम् नाचिकेताग्न्यनुष्ठानं ब्रह्मजज्ञात्मभूतां ब्रह्मजज्ञो जीवः तदात्मभूताम् तत्स्वरूपाम् । विदित्वा अनुसंधाय । नचिकेतम् नाचिकेतसंज्ञम् । अग्नि चिनुते अनुतिष्ठति । स उपासकः एव ब्रह्मजज्ञात्मभूतो भूत्वा [redacted]

[redacted]म् । चितौ ब्रह्मजज्ञ-स्वरूपत्वभावनायुक्तो भवन् तत् भगवदुपासनं करोति येन उपासनेन पुनः भूयो न जायते, जन्ममरणचक्रे न पतति । अयं भावः ब्रह्मात्मक-स्वस्वरूपताभावनापूर्वकमेव नाचिकेताग्न्यनुष्ठानं ब्रह्मोपासनाद्वारा मोक्षसाधनं न तु एतादृश भावनाविरहितमिति । अयं मंत्रोयद्यपि क्लिष्टव्याख्यानतया पौनरुक्त्यशंकया च कैश्चित् प्रक्षिप्तत्वेन गणितः, अत एव न व्याख्यातश्च, कैश्चित्तु व्याख्यातः, तथापि निरुक्त-दोषद्वयस्य वहुषु मंत्रेषु संभवात् तद्भयेन तेषामपि परित्यागप्रसंगः स्यादित्यस्माभिः परिगृहीत एव ॥१९॥

## एष तेऽग्निर्नचिकेतः स्वर्ग्यो यम वृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासः तृतीयं वरं नचिकेतो वृणीष्व ॥२०॥

हे नचिकेतः स्वर्ग्यः मोक्षस्थानभूतदेशविशेषप्रयोजनकः अग्निः अग्निविद्याः ते तुभ्यम् उपदिष्टो मयेति शेषः । यमग्निम् द्वितीयेन वरेण अवृणीथाः वृतवान् त्वमिशेषः जनासः जनाः "आज्जसेरसुग्" इति असुगागमः छान्दसो बोध्यः । एतम् मदुपदिष्टम् । अग्निम् तवैव त्वत्सम्बन्धिनमेव प्रवक्ष्यन्ति वदिष्यन्ति अर्थात् तवैव नाम्ना सम्बद्धमिमं नाचिकेतोऽग्निरित्येवं रूपेण व्यवहरिष्यन्ति लोकाः हे नचिकेतः अतः परं तृतीयं परं स्वाभीप्सितं वृणीष्व प्रार्थयस्व, यावत्तृतीयं वरं न ददामि तुभ्यं तावत् अपूर्णप्रतिज्ञ एवाहं स्यामिति भावः ॥२०॥

## येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥२१॥

मुमुक्षुर्नचिकेताः द्वितीयेन वरेण मोक्षसाधनभूतामग्निविद्यां पप्रच्छ ! अधुना मोक्षस्वरूपविषये पृच्छति, स हि वादिविप्रतिपत्त्या मोक्षस्वरूपे संदिहान आस्ते, तथा हि केचित् क्षणिकविज्ञानरूपस्यात्मनः स्वरूपसमुच्छेदमेव मुक्तिं वदन्ति। अपरे तु नित्यविज्ञानरूपमात्मनं मन्यमानाः तद्गता-विद्याऽस्तमयं मोक्षमामनन्ति। तार्किकास्तु अशेषविशेषगुणोच्छेदमात्मनो मुक्तिं वर्णयन्ति,। अन्येतु अपहतपाप्मत्वादिगुणविशिष्टः नित्य शुद्धः परमात्मैव उपाधिसंसर्गाद् जीवभावमुपैति, उपाध्यपगमाच्चयः तस्य परमात्मभावस्तमेव मोक्षस्वरूपतया निरूपयन्ति सवासनाऽनादिकर्मरूपाविद्याविच्छेदपूर्वकाविभूतापहतपाप्मत्वादिगुणाष्टकविशिष्टस्य जीवस्य अप्राकृतदेशविशेषविशिष्टपरमात्मानुभव एव मोक्ष इति परे वैदिकाः वदन्ति। पुष्करपलाशकल्पस्य आत्मनः प्रकृतिपुरुषाऽविवेकजन्य भोक्तृत्वाद्यभावविच्छेद एव मुक्तिरिति तु कापिलाः कल्पयन्ति। तदेवमादिभिः विप्रतिपत्तिभिः संशयाकुलितः नचिकेताः अस्ति नास्त्यात्मक विप्रतिद्वयेन सर्वाः पिप्रतिपत्तीं गृह्य संशय प्रदर्श्य मोक्षदशायां मुक्तस्य किंस्वरूपमिति पृच्छति–येयम् प्रेते इति प्रेते प्रकर्षेण इते तत्तद्वादिस्वीकृतसकलबंधनमुक्ते मनुष्ये मोक्षाधिकारिजीवे या इयमनुभूयमाना स्वबुद्धया विषयीक्रियमाणेति यावत् विचिकित्सा संशयः जायते इति शेषः। विचिकित्साहेतुभूते विप्रतिपत्तीर्दर्शयति अस्तीत्येके, सर्वबन्धविनिर्मुक्तो सत्याम् अयमात्माऽस्तीत्येके वदन्तीतिशेषः, अयमात्मा बन्धमार्गमानन्तरं नास्तीत्येके स्वरूपोच्छिति मोक्षमाचक्षाणाः वदन्ति, अतः एतद् आत्मस्वरूपं मोक्षदशायां कीदृशमिति त्वया विदितात्मयाथात्म्येन सर्वज्ञेन गुरुणा मृत्युना अनुशिष्टः उपदिष्टः अहं नचिकेता विद्याम् जातीयाम् यथा तथा मामुपदिशेति भावः। त्वया दातुं प्रतिज्ञातानां त्रयाणां वराणां मध्ये एष मोक्षस्वरूपविषकः मया प्रार्थ्यमानः तृतीयो वरोऽस्ति ॥२१॥

देवैरत्रापि विचिकित्सि पुरा नहि सुविज्ञेयमणुरेष धर्मः। अन्यं वरं नचिकेतो वृणीष्व मामोपरोत्सीरति मा सृजैनम् ॥२१॥

एवं मोक्षस्वरूपं नचिकेतसा पृष्टोऽपि मृत्युः पृष्टार्थस्य गंभीरतया-शिष्याधिकारपरीक्षणं विना तदिच्छामात्रेणोपदेष्टुमनिच्छन् तदधिकारं परीक्षितुमाह (देवैरिति)। मनुष्यापेक्षया आजानसिद्धप्रकृष्टज्ञाना हि देवा भवन्ति तैर्देवैरपि अत्र मुक्तात्मस्वरूपे पुरा विचिकित्सितम् संशयितम् पुरा सृष्ट्युत्तरकाल अतो देवानामपि दुर्विज्ञानमिदमिति भवादृशानां मनुष्याणां कृते तु अत्यन्तं दुर्विज्ञानमिति भावः। एतत् मुक्तात्मस्वरूपम् नहि सुज्ञेयम् सरलतया ज्ञातुमशक्यम् हि यत एष मुक्तात्मस्वरूपाख्यो धर्मः ध्रियमाणत्वात् परमात्मना, आत्मस्वरूपमपि धर्मः परमात्माधीन-स्वरूपस्थितिप्रवृत्तिर्हि आत्मेति भावः। अणुरति सूक्ष्मः. अत एतस्योपदेशे मया कृतेऽपि यदि त्वं ज्ञातुं न शक्नुयाः तदा निष्फलमेव भविता तव नैतः द्वरवरणम् तस्मात् हे नचिकेतः अन्यम् मुक्तात्मस्वरूपापेक्षया भिन्नं ज्ञातुमर्हं निश्चितफलं कमपि वरं यथेच्छं वृणीष्व प्रार्थयस्व। मा माम् मा उपरोत्सी इममुक्तात्मस्वरूपोपदेशाय मम उपरोधं न कुरु। यद्वा मामेति वीप्सायां द्वित्वम्। तथा च निषेधार्थकमापदद्वयेन अत्र विषये निर्बन्धं नैवाचरेत्यर्थः। एनं प्रतिज्ञातवरत्रयं मां मृत्युं अतिसृज मुक्त-स्वरूपोपदेशात् विमुञ्च। यद्वा मा मां प्रति एनं वरम् अतिसृज विमु-ञ्चेत्यर्थः। यद्यपि वरत्रयप्रदानात् पूर्वमहमधर्मण इवास्मि तथापि त्वादृशजन दुर्विज्ञेयत्र मुक्तात्मस्वरूपे उपदेशदानाय उत्तपर्ण इव कदाग्रहं न कुरुष्वेति भावः ॥२१॥

देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥२२॥

एवं मृत्युना एतादृशवरत्यागाय प्रेर्यमाणोऽपि नचिकेताः न ततश्चचाल आह च अत्र मुक्तात्मस्वरूपविषये देवैरपि विचिकित्सितम् संशयितम् किल इदं तु भवतः सकाशादेवावगतम् हे मृत्यो त्वञ्च न सुज्ञेयम् न सारल्येन ज्ञातुमर्हम् इति यत् मुक्तात्मतत्त्वमात्थ कथयसि अस्य दुर्विज्ञानस्य मुक्तात्मस्वरूपस्य अन्यः त्वद्भिन्नः त्वादृक् त्वत्सदृशः सर्वधर्मवेत्ता वक्ता मया मनुष्येषु सादरमन्विष्यमाणोऽपि न लभ्यः न प्राप्यः किञ्च एतस्य वरस्य तुल्यः अन्यः कश्चित् वरोऽपि नास्ति परमपुरुषार्थरूपनित्यफलप्राप्तिर्हि वरोऽयम् अन्यस्त्वेतदपेक्षया सर्वोऽपि न परमपुरुषार्थप्राप्तिकरः अतोऽनित्यफलः, तस्मात् यदि त्वादृशमपरं वक्तारम्, एतद्वरसदृशमपरं वरं च प्राप्नुयाम् समन्वेषणपरोऽपि तदैव त्वामेतद्वरप्रदानाय न निर्बध्नीयाम् एनं परं च मुञ्चेयम् नान्यथेति भावः ॥२२॥

शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्ति-हिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥२३॥

एवमुक्तोऽपि मृत्युः तस्मै स विद्वानुपसन्नाय प्रशान्तचित्तायेत्यादिश्रुतिप्रोक्तं प्रशान्तचित्तत्वमस्य परीक्षितुं प्रलोभयति शतायुषः इति। शतायुषः शतम् वर्षाणि आयूंषि येषाम् तान् शतवर्षप्रमाणजीवनान् पुत्रपौत्रान् पुत्राश्च पौत्राश्च तान् वृणीष्व प्रार्थयस्व, बहून् यथेप्सितसंख्याकान् पशून् गोमहिष्यादीन् वृणीष्व, हस्तिहिरण्यम् हस्ती च हिरण्यञ्च हस्तिहिरण्यम् जातावेकवचनम् । अत्रापि बहूनिति विशेषणं योज्यम् ईप्सितसंख्याकान् हस्तिनः ईप्सितपरिमाणं हिरण्यञ्च वृणीष्व । अश्वान् अपि बहून् वृणीष्व । किञ्च भूमेः पृथिव्याः महत् अतिविस्तृतम् आयतनम् मण्डलम् चत्वारिंशद्योजनपरिमितदेशसंज्ञितं

राज्यं वृणीश्व, यद्वा भूसम्बन्धि महत् विपुलम् आयतनम् शाला-प्रासादादिविशिष्टगेहं वृणीष्वेत्यर्थः । किञ्च सर्वमेतद् विफलं यदि तवायुरेवाल्पं स्यात् अतः यावद् वर्षाणि जीवितुं वाञ्छसि तावत् शरदः वर्षाणि स्वयं जीव शतायुर्वै मनुष्यः इति नियमस्तु तव पुत्रपौत्रेष्वेव न त्वयीति त्वं तन्नियममनादृत्य इच्छानुसारं चिरंजीवेतीति भावः ॥२३॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकाञ्च ॥ महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥२४॥

एतत्तुल्यम् एतेन मदुक्तेन वरेण तुल्यं सदृशं वरं कमपि अपरं यदि मन्यसे तर्हि तमपि वृणीष्व । वित्तम् मुक्ताफलमाणिक्यादिमहार्घरत्नरूपं प्रभूतमपि वृणीष्व । चिरजीविकाम् चिरकालपर्यन्तं जीवनञ्च वृणीष्व । हे नचिकेतः महाभूमौ महती चासौ भूमिः महाभूमिः तत्र आसमुद्रान्तभूभागे एतन्नाम्नैव त्वं एधि वर्धस्व सर्वोत्कृष्टः राजमूर्धन्यो भवेत्यर्थः । किञ्च अत्रैव महाभूमौ कामानां काम्यन्ते इति कामाः दिव्यस्रक्चन्दनाप्सरःप्रभृतयः तेषां कामभाजम् कामनाविषयं त्वां करोमि । अप्सरःप्रभृतयः भूमौ स्थितमपि यथा कामयेरन् तथा त्वां करोमीति भावः ॥२४॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामान् छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मा नु प्राक्षीः ॥२५॥

मर्त्यलोके भूलोके ये ये कामा विषयाः दुर्लभा दुःखेन लब्धुं शक्याः तान् सर्वान् कामान् छन्दतः स्वेच्छानुसारन् प्रार्थयस्व याचस्व, यतो मर्त्यलोके जातेन मर्त्यदुर्लभमेव प्रार्थनीयम् त्वमपि तथैवासीति भावः। इमाः पुरतो मत्प्रसादेन त्वयाऽपि दृश्यमानाः दिव्याः रामाः–रमयन्ति पुरुषं याः ताः अप्सरसः, सरथाः दिव्यैः रथैः सहिताः सतूर्याः तूर्यैः नृत्यगीतसाधनयुतैः दिव्यैर्वादित्रैः सहिताश्च सन्ति याः मनुष्याणां दुर्लभाः ताः अपि गृहाण। ईदृशाः दिव्याः स्त्रियः मनुष्यैः मानवैः न लंभनीयाः न प्राप्याः, मनुष्यदुर्लभत्वमासां प्रसिद्धमेवेति भावः। तस्मात् आभिर्दिव्याभिः मत्प्रदत्ताभिः मया तुभ्यमर्पिताभिः परिचारिकाभिः परिचारयस्व पादसंवाहननृत्यप्रदर्शनगीतश्रावणादिशुश्रूषां कारय। देहान्तरेणापि एतदीयशुश्रूषां कामयमानाः महता महाधनव्ययेन श्रमेण च यागादिकमाचरन्ति त्वं तु तदन्तरैव एतेनैव शरीरेण एतासां शुश्रूषां प्राप्स्यसि अत एतावतैव संतोषमाधारयस्व। हे नचिकेतः मरणम् अनु सर्वबंधविनिर्मुक्तेः पश्चात् यत् मुक्तात्मस्वरूपम् तत् मा प्राक्षीः न पृच्छ ॥२५॥

एवं बहुधा प्रलोभ्यमानो हि मृत्युना असंजातक्षोभो नचिकेताः प्राह —

**श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः। अपि सर्वं जीवितमल्पमेव तवैव वाहाः तव नृत्यगीते ॥२६॥**

हे अन्तक मृत्यो मर्त्यस्य मनुष्यस्य कृते ये कामाः पुत्रपौत्रहस्तिहिरण्यादयः त्वया प्रार्थ्यत्वेन उपस्थापिताः ते सर्वेऽपि श्वोऽभावाः श्वः अभावो येषाम् तादृशाः दिनद्वयस्थायिनोऽपि निश्चितरूपेण नश्यन्ति श्वो भविष्यन्ति न वेति संदिह्यमानत्वात् तेषाम्। यदेतदपर प्रलोभनमुक्तम् अप्सरःप्रभृति तदपि न प्रार्थ्यम्, यतः एताः अप्सरसः सर्वेन्द्रियाणां

बाह्यानामान्तराणाञ्च करणानां तेजः सामर्थ्यं जरयन्ति क्षपयन्ति । अतः प्रज्ञावीर्यधर्मयशःप्रभृति क्षपयितृत्वादनर्थहेतव एव ता इति भावः । या तु चिरजीविका प्रलोभयितुं त्वया प्रदातुमाख्याता साऽपि न प्राज्ञमतेः प्ररोचनोपयुक्ता यतः सर्वमपि जीवितमल्पमेव । ब्रह्मा एव सर्वजीवानामग्रणीः तस्यापि जीवनम् सावधित्वादल्पमेव किमितरेषां जीवनस्याल्पत्ववर्णनेन । तस्मात् त्वत्प्रदर्शितात् मानुषात् दिव्याच्च भोगात् चिरजीवनाच्च विरक्तस्य मे त्वत्तो लब्धैरेभिः किम् कार्यम्, अतः ते त्वया दर्शिताः वाहा—अश्वादयः, तवैव सन्तु नैतैः साध्यं किमपि मम प्रयोजनम् । नृत्यगीते, नृत्य च गीतञ्च नृत्यगीते अपि तवैव भवताम् नाभ्यामपि विरक्तस्य मे प्रयोजनम् इति भावः ॥२६॥

न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा । जीविष्यामो यावदोशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥२७॥

मनुष्यः वित्तेन प्रभूतेनापि न तर्पणीयः न सन्तोषमापदनीयः, नहि वित्तलाभेन कस्यचिदपि तृप्तिर्दृष्टचरी न आशाया अवधिशून्यत्वात् । तथापि वित्ताशा यदि स्यात् तर्हि वित्तं लप्स्यामहे प्राप्स्यामो वयमवश्यमेव त्वाम् महोदारस्वभावं समर्थं महापुरुषमद्राक्ष्म दृष्टवन्तः । नहि भवादृशमहोदारमहापुरुषदर्शने सत्यपि वित्तचिन्ताऽस्मान् बाधेत कदापीति भावः । यावत्कालं त्वम् ईशिष्यसि याम्ये पदे स्थितः सन् जीवनं नियमिष्यसि तावत्कालं वयमपि जीविष्यामः एव यतोऽस्मत्प्रणयिनस्तवाज्ञामतिक्रम्य मदीयजीवनान्तरकृत् को नाम भवेत् वरस्वीकारास्वीकारेऽपि सर्वमेतत् सिद्धमेवास्माकम् अतोहेतोः "येयं प्रेते" इत्यादिना पूर्वं प्रस्तुतो यो वरः स एव वरः मुक्तात्मस्वरूपविषयः वरणीयः प्रार्थनीयो नान्य इति भावः ॥२७॥

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्। अभिध्यायन् वर्णरतिप्रमोदान् अतिदीर्घे जीविते को रमेत ॥२८॥

किञ्च जीर्यन् जरामरणाद्युपद्रुतः क्वधःस्थः कुः पृथिवी सा तु अधः अन्तरिक्षादिलोकापेक्षयास्ति तत्र तिष्ठतीति क्वधःस्थः भूतलवर्ती, यद्वा कुः कुत्सितः दुःखप्रचुरत्वात् अधः अधोदेशः तत्र तिष्ठतीति क्वधःस्थः मनुष्यलोके स्थितः कः मर्त्यः, अमृतानाम्-जरामरणशून्यानां मुक्तानामात्मनां स्वरूप उपेत्य ज्ञात्वा, गत्यर्थकेणधातोः ज्ञातार्थकत्वसम्भवात्। प्रजानन् स्वीयजरामरणाद्युपप्लव दुःखबहुलाधोदेशवृत्तित्वं च प्रकर्षेण सम्यक्तया जानन् अनुभवत् सन्। वर्णरतिप्रमोदान् अभिध्यायन् वर्णाः अप्सरःप्रभृतिगतरूपलावण्यादयः। रतिः तत्कृतस्नेहादिः। प्रमोदः तत्सम्भोगजन्यः सुखविशेषः तान् अभिध्यायन् उत्कण्ठाकुलितचेतसाऽनुचिन्तयन् अतिदीर्घे जीविते भवता दित्सितायां चिरजीविकायां रमेत। अपहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वाद्याविर्भूतगुणाष्टकविशिष्टमुक्तात्मस्वरूपज्ञाने सति कोऽपि जरामरणधर्मा विवेकी अप्सरःप्रभृतिभोगेषु चिरजीवनान्वितेषु अपि रुचिं नैव कुर्यादिति भावः। क्वचित् "अतिदीर्घे" इत्यत्र "अनतिदीर्घे" इति पाठः-क्वधःस्थः इत्यत्र क्वचितदास्थः तु इति पाठः। तत्पक्षे-तत्र अप्सरः प्रभृति भोगे आस्था आस्थितिर्वर्तनं यस्य सः तदास्थः एवं भूतः क्व कथं भवेन्मर्त्यो विवेकीत्यर्थः। वर्णाः "आदित्यवर्णं तमसःपरस्ता" दित्यादिश्रुतिश्रुताः। रतिप्रमोदाः अप्राकृतदेशवर्तिपरमपुरुषानुभवजन्यसुखविशेषाः तान् अभिध्यायन् नैपुण्येन समालोचयन् अनतिदीर्घ अत्यल्पे-जीवने कः रमेत कः प्रीतिमान् स्यात् न कोऽपीत्येवं व्याख्या योजनीया ॥२८॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो! यत्साम्पराये महति ब्रूहि नस्तत्। योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥२९॥

इति काठकोपनिषदि प्रथमाध्यायस्य प्रथमावल्ली।

हे मृत्यो यस्मिन् मुक्तात्मस्वरूपे इदम् अस्ति, नास्तीत्येवं रूपम् विचिकित्सन्ति मनुजाः देवाश्च संशयं कुर्वन्ति, महति महत्प्रयोजनान्विते सांपराये पारलौकिके सर्वबंधविनिर्मुक्ते आत्मनिविषये यत् ज्ञातव्यम् तदेव नः अस्मभ्यं ब्रूहि समुपदिश, गूढम् अतिगुप्तम् यन्मुक्तात्मतत्वम् तदनुप्रविष्टः तद्गोचरो यो वरः तस्मात् अन्यमनात्मविषयं वरं नचिकेता अयं जनः त्वच्छिष्यतामुपगतो न वृणीते न प्रार्थयते । नचिकेता इति स्वनामनिर्देशो न स्वस्य अप्रलोभनीयतां व्यञ्जयति । यद्वा श्रुतिरेवास्मान् बोधयति एतेन वाक्येन यत् नचिकेता अन्यं वरं न वृणीते इति ।

-----

इति काठकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य

प्रथमावल्ली ।।२९।।

# अथ प्रथमाध्यास्य द्वितीया वल्ली

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ।।१।।

अथ शिष्य सम्यक् परीक्ष्य तदीयमुमुक्षां सुस्थिरामवगत्य मुमुक्षां मुमुक्षं शिष्यञ्च प्रशंसितुकामो यमः पूर्वं श्रेयः प्रेयो वर्त्मनी पृथक्तया दर्शयति—अन्यदिति, श्रेयः प्रेयः शब्दैः मोक्षाभ्युदयपरावपि तत्साधनवर्त्मनोरत्र प्रतिपादकौ । श्रेयः अतिशयेन प्रशस्तं मोक्षवर्त्मेत्यर्थः, अन्यत् भिन्नमेव, एवं प्रेयः अतिशयेन प्रियम् भोगवर्त्म, उतशब्दोऽप्यर्थः, तेन प्रेयोवर्त्माऽपि अन्यदेव, श्रेयोवर्त्मापेक्षया भिन्नावेव, उभयोः परस्परवैलक्षण्यमस्तीति भावः । वैलक्ष्यण्ये हेतुमाह-ते उभे ते पूर्वोक्ते श्रेयः. प्रेयसो द्वे अपि । नानार्थे नाना परस्परविलक्षणः अर्थः प्रयोजन ययोस्ते भिन्नप्रयोजने एकस्य मोक्षः अपरस्य तु अभ्युदयः प्रयोजनमिति

भावः, एतेन प्रयोजनभेदो मार्गयोर्भेदहेतुःप्रदर्शितः । पुरुषं स्वस्वाधिकारिणम् सिनीतः बध्नीतः, श्रेयो वर्त्ममोक्षार्थिनं स्वस्मिन् प्रवर्तयति स्ववशे कृत्वा, प्रेयोवर्त्मतु अभ्युदयार्थिनं स्ववशे कृत्वा स्वस्मिन् प्रवर्तयतीति भावः । तयोः श्रेयःप्रेयोमार्गयोः मध्ये श्रेयः श्रेयोमार्गम् आददानस्य गृह्णतः निःश्रेयसाय प्रयत्नमाचरतः साधु शिवम् निश्श्रेयसमिति यावत् तदेव हि वास्तवं शिवम् नित्यत्वादिति भावः भवति । यः यस्तु प्रेयोऽभ्युदयवर्त्म वृणीते स्वीकरोति अभ्युदयसाधने ज्योतिष्टोमादौ यत्नमादधाति स इत्यध्याहार्यम् अर्थात् परमपुरुषार्थात् निश्श्रेयसात् हीयते वियुज्यते उ अवधारणे, पुरुषार्थात्स भ्रष्टोऽवश्यं भवतीत्यर्थः । मार्गवरणे एव बुद्धेरुपयोगः प्रथम कार्यः त्वया मोक्षमार्ग एव वृत इति प्रशंसार्हस्त्वमिति शिष्यं प्रतिव्यनक्ति मृत्युरत्र मन्त्रे ॥१॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ॥२॥

मार्गद्वयस्यापि पुरुषसाध्यत्वात् श्रेय एव सर्वो वृणुयात् न प्रेयः तत्कथं लोकस्याधिक्येन प्रेयसि प्रवृत्तिरित्याशंकायामाह—श्रेयश्चेति । श्रेयश्च प्रेयश्च एतद्द्वयमपि मनुष्यम् अनुष्ठानोपयुक्तशरीरेन्द्रियादिमन्तं मनुजम् एतः आसमन्तात् आभिमुख्येन वा इतः प्राप्नुतः, तत्साध्ययो निःश्रेयसाभ्युदययोर्द्वयोरपि पुरुषार्थत्वात् अत्र चकारद्वयम् समुच्चयार्थत्वात् द्वयोरपि नीरक्षीरवत् संमिश्रत्वं द्योतयितुम् । धीरः हंसवद् विवेचनशीलबुद्धिः जनः तौ श्रेयःप्रेयःशब्दार्थौ संपरीत्य सम्यक् विज्ञाय विविनक्ति नीरक्षीरन्यायेन परस्परसंमिश्रौ अपि तौ पृथक् करोति । धीरः, विवेकशीलबुद्धिः प्रेयसः अभिप्रेयोऽपेक्षया अभ्यर्हितं श्रेयो हि, श्रेय एव वृणीते । यद्वा प्रेयसः अभि, प्रेयोऽपेक्ष्यल्यप्लोपपञ्चमीसमाश्रयात्, श्रेयो हि श्रेय एव अभिवृणीते अभितः स्वीकरोति

लाघवपरिज्ञानात् मन्दः विवेकासमर्थबुद्धिर्जनः योगक्षेमात् हेतोः "शरीरादेरुपचयोऽत्र योगः तत्परिरक्षणञ्च क्षेम." शरीरेन्द्रियाद्युपचयपरिरक्षणार्थी पशुपुत्रादिलक्षणं भोग्यजात वृणीते स्वी करोति, भोग्यजातसाधनकर्मानुष्ठाने गौरवमायासाधिक्यादिलक्षणं परिज्ञातुमसमर्थत्वात् मन्दबुद्धित्वमस्येति भावः ॥२॥

स त्वं प्रियान् प्रियरूपांश्च कामान् अभिध्यान्नचिकेतोऽत्स्राक्षीः ।
नैतां सृङ्कां वित्तमयोमवाप्तः यस्यां मज्जन्तिबहवो मनुष्याः ॥३॥

हे नचिकेतः स त्वम् यः पूर्वं मया बहुशः भोग्यजातवरदानव्याजेन प्रलोभितोऽप्यप्रचलित एवाभूः तादृशस्त्वम् प्रियान् स्वभावतः प्रियान् पुत्रादीन् । प्रियं रूपं येषामप्सरः प्रभृतीनाम् तादृशान् कामान् काम्यन्ते इति कामा अप्सरःप्रभृतयः तान्पुत्रादीनां स्वभावत एवं स्पृहणीयात्वम् अप्सरःप्रभृतीनां तु रूपलावण्यादित इति प्रसिद्धमेतत् । अभिध्यायन् नैपुण्येन निरूपयन् निःसारत्वानित्यत्वदुःखपरिणामत्वादिकं तेषु चिन्तयन्नित्यर्थः । अत्यस्राक्षीः परित्यक्तवानसि वित्तमयीं धनमयीम् एतां मया प्रदीयमानां सृङ्कां रत्नमालाम् यद्वा कुत्सितां मन्दबुद्धिसेव्यमानां सृतिं न आवाप्तः न स्वीकृतवान् यद्वा न प्राप्तवानसि यस्यां कुत्सितायां गतौ बहवोऽसंख्याताः मनुष्याः निमज्जन्ति पतित्वा सीदन्ति अतः सारासारविवेचनचातुरीयुक्तस्त्वं प्रशंसनीयोऽसीति भावः ॥ ३ ॥

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥४॥

या कर्मकाण्डे प्रसिद्धा काम्यकर्मस्वरूपा अविद्येति ज्ञाता समवगता पण्डितैरिति शेषः । या च वेदान्तेषु प्रसिद्धा तत्त्वज्ञानस्वरूपा विद्येति ज्ञाता पण्डितैरिति शेषः । प्रेयःसाधनभूता अविद्या श्रेयः साधनभूता तु विद्येति विवेकः । एते विद्याऽविद्ये दूरम् अत्यन्तं विपरीते तेजस्तमसीव

परस्परविरुद्धस्वरूपे एकस्याः तत्त्वज्ञानरूपत्वात् अपरस्याश्च काम्यकर्मरूपत्वात् इति भावः। विषूची विपरीतं फलं सूचयतः इति विषूच्यौ । छान्दसः सवर्णदीर्घः । विभिन्नफलिके इत्यर्थः । विद्यायाः मोक्षफलकत्वात् अविद्यायाश्च संसारफलकत्वादिति भावः । तत्र विद्याविद्ययोर्मध्ये विद्यामीप्सितं विद्यार्थिनं नचिकेतसं त्वामहं मन्ये श्रेयःसमुत्सुकतायास्त्वयि परिज्ञानात् इति भावः । यस्मात् हेतोः बहवोऽपि मया दीयमानाः कामाः अप्सरः-प्रभृतयः त्वा त्वाम् न अलोलुपन्त श्रेयोमार्गात् विच्छेदं कर्तुम् समर्थाः नाभूवन् । अप्सरः प्रभृतिभोगाय त्वं बहुशः प्रचालितोऽपि प्रचलितो नाभवः इति श्रेयः साधनविद्याकामस्त्वं स्तोतुमर्हसीति मृत्योरभिप्रायः । अलोलुपन्तेत्यत्र छान्दसो यङ् लुक् ।। ४ ।।

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमानाः यथान्धाः ।।५।।

इदानीमविद्यां काम्यकर्मरूपां ये सेवन्ते तेषामधोगतिं दर्शयति मृत्युः (अविद्यायामिति) अविद्यायाम् काम्यकर्मादिरूपायामन्तरे अविद्यामध्ये अविरलितसंतमसे इव वर्तमानाः तत्र निमज्जन्तः पुत्रभार्यापशुहिरण्यादितृष्णापरिगताः इत्यर्थः। स्वयं धीराः स्वयं प्रज्ञाशालिनः अन्यदृष्ट्या ये बुद्धिरहिता एव स्वदृष्ट्या आत्मानं बुद्धिमन्तं ये मन्यन्ते ते स्वयंधीरा इत्युच्यन्ते । पण्डितं शास्त्रविषये मतिमन्तमात्मानं ये मन्यन्ते ते पण्डितंमन्यमानाः आत्मनि शास्त्रनिपुणताभिमानवन्तः । एवंभूताः मूढाः विवेकरहिता जनाः अन्धेन चक्षुर्विहीनेन जनेन नीयमानाः विषमे कण्टकादिसमाकीर्णे वा वर्त्मनि प्राप्यमाणाः अन्धाः दृष्टिरहिता जना यथा परियन्ति परितः अनर्थान् कण्टकवेधशरीरपादादिभङ्गरूपान् यन्ति प्राप्नुवन्ति तथा दन्द्रम्यमाणाः। गत्यर्थो यङन्तो द्रम्धातुः । कुटिलं गच्छन्तः कुटिलगतिं प्रतिपद्यमानाः परियन्ति परितः स्वर्गनरकपशुस्थावरादियोनिषु नानाप्रकाराणि दुःखानि प्राप्नुवन्ति । दन्द्रम्यमाणा इत्यपि क्वचित्पाठः । तथा विषयवासनावह्निविद्रूयमाणमनस इत्यर्थः ।। ५ ।।

न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

संपरेयते सम्यक् अस्मात् लोकात्परावृत्य गम्यते इति संपरायः परलोकः संपरायः एव सांपरायः, यद्वा सम्परायः परलोकः प्रयोजनमस्येति साम्परायः परलोकसाधनभूतं शास्त्रप्रतिपाद्यं वर्त्म, स साम्परायः बालम् बालमिव विवेकस्पर्शहीनम् । अत एव प्रमाद्यन्तम् शरीरोपचयसाधनेषु पश्वन्नप्रभृतिषु समासक्ततयाऽसमाहितचित्तम् । वित्तमोहेन मूढम् वित्तम् रत्नहिरण्यादि तन्निमित्तेन मोहेन अविवेकेन मूढम् मुग्धम् विषयवासनाकवलितान्तःकरणम् जनं प्रति न भाति न प्रकाशते । अस्ति कश्चित् परलोकोऽपि पदार्थः, तत्साधनमार्गो वा शास्त्रबोधित इति मानमविवेकिनो धनाशापरीतस्य नैव भवतीत्यर्थः । तस्मात् अयं दृश्यमानः लोक एवास्ति, दृष्टस्यैव प्रामाण्याभिमानात् । परः परलोकः नास्ति तस्यादृश्यमानत्वात् इति मानी अभिमानवान् । स हि केन परलोको दृष्टः ततो नास्त्येव स इति मन्यते, एवंभूतो जनः पुनः पुनः जन्ममरणपरम्परया बारंवारम् मे मम दण्डधरस्य शासितुर्यमस्य वशं आधीन्यम् आपद्यते मया क्रियमाणायाः मम यातनाया विषयो पौनःपुन्येन भवतीत्यर्थः । क्वचित् 'इति मानी" त्यत्र "उत मानी" ति पाठः, तदा उत शब्दस्य अपि समानार्थत्वात् अयं लोको नास्ति, परोऽपि लोको नास्ति इत्येवमन्वयः कार्यः । तत्पक्षे बाल इव विवेकहीनः इमं लोकं न मन्यते शिष्टैरपरिगृहीतत्वात् परलोकमपि न मन्यते विषयवासनापरीतत्वात् तस्मात् ईदृशदुष्टात्मनः पौनः पुन्येन मम यातनाविषयता भवत्येवेति भावः ॥ ६ ॥

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ।७॥

अनेकजन्मसमुपार्जितसुकृतपरम्परया त्वादृशः श्रेयोर्थी विरल एव

भवतीति नचिकेतसं प्रशंसितुमाह श्रवणायापि शास्त्रतात्पर्यविद्यया निश्चेतुमपि यः परमात्मा बहुभिः श्रोतृभिः न लभ्यः प्राप्योऽस्ति, बहवो जनाः श्रुतिजन्यपरमात्मतत्त्वविनिश्चयाय न प्रवर्तन्ते किन्तु प्राक्तनपुण्यपरिपाकवन्तोऽल्पीयांस एवात्र प्रवर्तन्ते इति भावः, शृण्वन्तोऽपि ये परमात्मतत्त्वं प्रवर्तन्ते विनिश्चेतुं तेष्वपि बहवः जनाः यं परमात्मानं न विद्युः न जानन्ति किन्तु श्रवणपरेष्वपि कश्चिदेव ज्ञातुं प्रभवति । अस्य एवंभूतस्यासुलभज्ञानस्य परमात्मनः कुशलः निपुणः वक्ता उपदेष्टा आश्चर्यः अद्भुत एव । शिष्यप्रतिपत्तिकारिनैपुण्येन समुपदेष्टाऽपि परमात्मतत्त्वस्य महान् दुर्लभ इति भावः । एवम् कुशलानुशिष्टः कुशलेन निपुणेनाचार्येण अनुशिष्टः समुपदिष्टः परमात्मतत्त्वस्य ज्ञाता अपि आश्चर्य एव । विरल एव निपुणतमगुरूपदिष्टोऽपि याथार्थ्येन परमात्मतत्त्वज्ञाता भवतीत्यर्थः । अस्यलब्धा अपि आश्चर्यः निपुणतम गुरूपदेशसामर्थ्यावगतपरमात्मयाथार्थ्येष्वपि विरल एव उपायानुष्ठानतोऽस्य प्राप्तिकर्तेति सर्वतोऽस्य दौर्लभ्यादाश्चर्यकरत्वमिति भावः ॥ ७ ॥

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥८॥

पूर्वमन्त्रे परमात्मतत्त्वस्य वक्ता ज्ञाता चाश्चर्य इत्युक्तम् । तत्र हेतुस्तु नोपन्यस्तः तमनेन मन्त्रेण समुपन्यस्यति अवरेण हीनेन प्राकृतबुद्धिना देहेन्द्रियादिष्वात्माभिमानवता नरेण प्रोक्तः प्रकर्षेण उक्तः समुपदिष्टोऽपि एष परमात्मा न सुविज्ञेयः नहि सम्यक् विज्ञातुं शक्यो यतो हेतोः वादिभिः तैस्तैस्तान्त्रिकैः बहुधा चिन्त्यमानः अस्तिनास्तीत्येवं रूपेण, कर्ता अकर्ता इत्येवंरूपेण नित्योऽनित्य इत्येवंरूपेण बहुप्रकारेण विचार्यमाणोऽस्ति, प्रकारबाहुल्यात् । अकृतात्मसाक्षात्कारवता नरेण प्राप्तोपदेशस्यापि संभ्रमावश्यंभावात् । अत यदुपदेशेन निर्विचिकित्सं प्रतिपद्येतायमात्मा तादृशो वक्ता आश्चर्य एव । एवं सत्यपि कृतात्मसाक्षात्कारवतोपदेशे विषयवासनावशीकृतमनसा अवरेण नरेण नैव सम्यग्

ज्ञातुमर्हं इति ज्ञाताऽपि गतवासनः कश्चिदेवातो ज्ञाताऽस्याश्चर्य इति भावः। अनन्यप्रोक्ते अन्येन स्वापेक्षया भिन्ने ब्रह्मसाक्षात्कारवता गुरुणा प्रोक्तः अन्यप्रोक्तः तद्भिन्ने गुरूपदेशमन्तरेण स्वबुद्धिव्यापारमात्रेण विचिन्तितेऽत्र परमात्मस्वरूपे गतिः अवगमः सम्यग् ज्ञानमित्येतत् नास्ति न भवति कस्यापि। यद्वा अनन्येन परमात्मनि स्वात्मत्वानुसंधानवत्तया तदैकान्तिकेन तत्साक्षात्कारवता प्रोक्ते अत्र परमात्मस्वरूपे अगतिर्नास्ति किन्तु ब्रह्मावगतिर्भवत्येव। यद्वा ब्रह्मसाक्षात्कारिणा ब्रह्मस्वरूपे प्रोक्ते सति अत्र संसारे गतिः भ्रमणं नास्ति तादृशगुरूपसदनवतः, यतः तादृशगुरूपदेशसामर्थ्याविगतपरमात्मयाथात्म्यो भवत्येव स इति भावः। ऊहापोहविशिष्टः तर्ककुशलः स्वयमपि कथन्नावगच्छेत्, अवरप्रोक्तेऽपि तर्ककौशलेन वा कथन्न विज्ञातयाथात्म्यः स्यादित्याशंकां निराकर्तुमाह- अणीयान् अणुप्रमाणात्। अणुप्रमाणात् अणोरपि अणीयान् अतिशयेनाणुरेव तर्केण हि अणुपरिमाणपर्यन्तं कश्चित्स्थापयितुमर्हति न ततोऽणुतरम् तत्र तर्कस्याप्रसरात् इदञ्च ब्रह्मतत्वमणोरणुतरमिति हेतोः अप्रतर्क्यम् तर्कागोचरभूतम् अतो न स्वतर्कमात्रेण अवरोपदेशसहकृततर्केण वा ज्ञातुमर्हमिति भावः॥ ८॥

नैषा मतिस्तर्केणापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ।
यां त्वमापः सत्यधृति बतासि त्वादृङ् नो भूयान्नचिकेतः
प्रष्टा॥ ९॥

यस्मात् परमात्मस्वरूपमप्रतर्क्यमतो हेतोः एषा परमात्मविषयिणी तर्केण स्वबुद्धिसम्पादितोहापोहमात्रेण न अपनेया न प्राप्तुमर्हा, तर्ककौशलमात्रं नात्र प्रभवतीत्यर्थः। यद्वा एषामतितर्केण गुरूपदेशमुल्लंघ्य केवलेन कृतेन न अपनेया न दूरीकार्या तर्कमात्रेण ब्रह्मतत्वमवजिगमिषुरपि नाधिगच्छति किन्तु ततोऽपगतैष भवति सावगतिरित्येतत्। हे प्रेष्ठ प्रियतम नचिकेतः अन्येनातत्वसाक्षात्कारिणा गुरुणा प्रोक्ता समुपदिष्टा एव मतिः सुज्ञानाय मोक्षसाधनभूताय ज्ञानाय

भवति सा मतिः केति जिज्ञासायामुपदिशति यां मतिं सर्वबन्ध-विनिर्मोक्षोत्तरकालीनात्मविषयां त्वम् आपः मद्वरप्रदानेन प्राप्तु कृतनि-श्चयोऽसि त्वमित्येतदेव विशिनष्टि सत्यधृतिरिति, सत्या अप्सरःप्रभृ-तिरपि अकम्पनीया धृतिः मनःस्थिरता यस्य तादृश, हे नचिकेतः त्वादृशः त्वत्समः सत्यधृतिः प्रष्टा शिष्यो मे भूयात् । बतेत्यव्ययम नुकम्पायाम् । सा चानुकम्पा त्वादृशः प्रष्टा भूयादित्यनेन प्रदर्शिता भवति स्तुतिव्यञ्जनया ॥ ९ ॥

जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥

प्रसन्नो मृत्युः यथा परमात्मतत्त्वं ज्ञातवान् तदनेन मन्त्रेण नचिकेतसमुपदिशति–शेवधिः निधिः तद्वद्भोग्यत्वात् सर्वमेव कर्मफल-मित्यर्थः । अनित्यम् अत्र छान्दसं नपुंसकत्वम् अनित्य इति भाव्यम् निधिविशेषणत्वात् । अनित्यः न सदास्थायी जन्यत्वेन विनाशित्वात् । इति अहं मृत्युः जानामि सम्यग् वेद्मि । तत् परमात्मस्वरूपम् ध्रुवम् नित्यम् अत एव अध्रुवैरनित्यफलसाधनभूतैः कर्मभिर्न प्राप्यते । हि निश्चितमेतत् ॥ ततः नित्यस्यानित्यफलसाधनैरप्राप्यत्वज्ञानवत्त्वादेव हेतोः मया मृत्युना नचिकेतः अग्निः नाचिकेतनाम्नाख्यातः अग्निः अनित्यैरिष्टकादिद्रव्यैः परमात्मज्ञानमुद्दिश्य फलान्तरनिरपेक्षया चितः निर्वर्तितः अतः नित्यं परमात्मप्राप्तिरूपनित्यफलसाधनं ज्ञानं प्राप्तवान् लब्धवानस्मि । यद्यपि ब्रह्मज्ञानमप्यनित्यम् तथापि नित्यफलसाधनत्वात् अनित्यत्वमुच्चयते ॥ १० ॥

कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।
स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥

विरक्तस्यैव ब्रह्मविद्यायामधिकार इति प्रदर्शयन् नचिकेतसः वैराग्यमनुस्मरति तं प्रशंसितुं प्रसादमापन्नो मृत्युरनेन मन्त्रेण । हे नचिकेतः क्रतोः कर्मणः यागादिरूपस्य प्रतिष्ठाम् फलरूपाम् जगतः जगत्सम्बन्धिनः ब्रह्माण्डान्तर्गतस्य चतुर्मुखस्थानपर्यन्तस्य सर्वस्य कामस्य कामनाविषयस्य आप्तिम् प्राप्तिम् दृष्ट्वा विचिन्त्य दुःखमिश्रत्व–दुःखोदर्कत्वाऽसंदातनत्वविनाशित्वादिदोषसन्दोहविशिष्टविषयप्राप्तिरूपतया जघन्यामनित्याञ्चावधार्य, परमपुरुषार्थे च आनन्त्यम् अन्तो विनाशस्तद्रहितोऽनन्तस्तस्य भाव आनन्त्यमविनाशित्वम् अभयस्य त्रासराहित्यस्य पारम् चरमां काष्ठाम् स्तोमम् समुदायम् अपहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वादि गुणानामाविर्भूतम्, स्तवनीयत्वम् महत् महत्त्वम् भावप्रधाननिर्देशः, उरुगायः उरुः महान् गीयते इति गायः कीर्तिः, तमुरुगायं महतीकीर्तिम् प्रतिष्ठाम् स्थिरताञ्चापुनरावृत्तिस्वरूपां दृष्ट्वा समवधार्य मया दीयमानान् कामान् अत्यस्राक्षीः त्यक्तवानसि तस्मात् त्वं धीर सारासारविवेचनसामर्थ्यप्रज्ञावानसि । यद्वा मोक्षप्राप्तौ एव जगतः सर्वस्य प्राप्तिम् क्रतोः प्रतिष्ठाञ्चान्तर्गतां सत्यकामत्वादिगुणाविर्भावविचिन्तनादवधार्य, मया दीयमानां कामाप्तिम् त्यक्तवानतः धीरोऽसीति योजनीयम् ॥ ११ ॥

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेनदेवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥

एवं पूर्वमन्त्रोक्तक्रमेण नचिकेतसः मोक्षाधिकारं प्रशंस्य 'ये यं प्रेते' इति मन्त्रेण पृष्टं मोक्षस्वरूपं प्रतिवक्तुमाह ('तमि'ति) तम् पूर्वोक्तम् श्रवणायापि बहुभिर्यो लभ्य इत्यत्र दुर्लभतया प्रतिपादितमित्यर्थः । दुर्दर्शम् दुःखेन योगादिरूपदुःखेनान्तरीयकेन उपायेन द्रष्टुमर्हम् विरलसाधकदर्शनीयमित्येतत् । अत्र हेतुमाह गूढम् कर्मरूपया विद्ययाऽन्तर्हितम् । अनुप्रविष्टं अन्तर्यामिरूपेण सर्वभूतान्तर्गतम् । गुहाहितम् । गुहायाम् हृदयाकाशरूपायाम् आहितम् स्वरूपेणापि वर्तमानम् । गह्वरेष्ठम् गह्वरे

रागद्वेषादिभिरतिसंकटे अन्तःकरणे स्थितम् । यद्वा गह्वरे दुष्प्रवेशे अप्राकृते साकेताख्ये प्रदेशे स्थितम् । यद्वा गह्वरे परिशुद्धस्वरूपे जीवे स्थितम् । पुराणम् पुरातनमनादिमिति यावत् । देवं । निरतिशयम् दीप्यमानं परमात्मानमित्यर्थः तस्यैव सर्वातिशायिदीप्तिमत्वावगमात् श्रुतिश्च भवति "यस्य भासा सर्वमिदं विभाति" एतावत् पर्यन्तमुपेयस्य स्वरूपमुक्तम् अध्यात्मयोगाधिगमेन आत्मानमधिकृत्य प्रवर्तितो योगः अध्यात्मयोगः परमात्मैकचिन्तनरूपः तस्य अधिगमः प्राप्तिः तेन । अनेन उपायस्वरूपमुक्तं भवति । केचन आत्मनि जीवस्वरूपे इति अध्यात्मम् तत्र योगः बाह्यविषयेभ्यः प्रत्याहृतस्य मनसः समाधानम् तेन योधिगमो ज्ञानम् तच्च जीवात्मज्ञानम् तेन अध्यात्मयोगाधिगमेन, अनेन परिशुद्ध-जीवात्मज्ञानस्य परमात्मज्ञाने कारणत्वं समर्थितम् । मत्वा ज्ञात्वा ज्ञानञ्चेदं निदिध्यासनवेदनादिशब्दवाच्यसाक्षात्काररूपम् बोध्यम् । एतावता विशुद्धजीवात्मज्ञानपूर्वकपरमात्मसाक्षात्काररूपः मोक्षस्योपायः प्रतिपादित इति वर्णयति । धीरः विवेचनकुशलमतिः हर्षशोकौ विषयलाभजन्यसुखविशेषो हर्षः तदलाभजन्यो दुःखविशेषः शोकः, जहाति परित्यजति, विषयलाभालाभप्रयुक्तसुखदुःखभाक् न भवति आत्यन्तिकदुःखनिवृत्तिपूर्वकपरमात्मानुभवसहकृतपरमानन्दावाप्तिरूपं मोक्षमापद्यते इति भावः । अनेन फलं प्रतिपादितम् ।। १२ ।।

एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्ममणुमेतमाप्य ।
स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ।।१३।।

मर्त्यः उपलक्षणमेतदधिकारिमात्रस्य तेन, मनुष्यदेवादिरूपोधिकारीत्यर्थः । एतत् पूर्वोक्तं परमात्मस्वरूपम् श्रुत्वा गुरूपदेशतो वेदान्तवाक्यद्वारा निश्चित्य सम्परिगृह्य सम्यक् संशयविपर्यासनिरासपूर्वकमवधार्य मननं कृत्वेति यावत् । उपलक्षकमिदं निदिध्यासनस्यापि तेन श्रवणमनननिदिध्यासनपूर्वकं साक्षात्कृत्वेत्यर्थः । धर्म्यम् धर्मशब्दः पुण्यपापरूपकर्म-

मात्रपर', तेन कर्मसाध्यम् शरीरेन्द्रियादिकम् धर्ममित्युच्यते । प्रवृह्य प्रारब्धावसाने सति परित्यज्य अणुं सर्वतः सूक्ष्मम् पूर्वत्र निर्दिष्टम् एतम् परमात्मानं प्रत्यक्षविषयतोपलक्षिते एतच्छब्दप्रवृत्तीरेतच्छन्देन निर्देशं मृत्युः स्व प्रत्यक्षविषयत्वाभिप्रायेणाऽकरोत् । आप्य अप्राकृते साकेताख्ये देशविशेषे प्राप्य, सः उक्तोपासनाविशिष्टः उपासकोऽधिकारी, मोदनीयम् प्रीतिविशेषविषयीकृतम् आविर्भूतापहतपाप्मत्वादिगुणाष्टकं स्वकीयं वास्तवं ब्राह्मं स्वरूपं लब्धा मोदते परमात्मानुभवरूप परमानन्दभाक् भवति । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" "परं ज्योतिरुपसम्पद्य स्वेन रूपेण निष्पद्यते" इत्यादि श्रुतिबोधितस्वरूपाविर्भावपूर्वकपरमात्मानुभवमोक्षशाली भवतीत्यर्थः । एवं नचिकेतसः प्रश्नस्योत्तरमभिधाय तस्य मोक्षयोग्यतामाख्याति-नचिकेतसं त्वां प्रति सद्म ब्रह्मस्वरूपं धाम, विवृतं समुद्घाटितद्वारम् अतएव प्रवेशाय सुगम मन्ये-जानामि मृत्युरहमिति शेषः । श्रुतिश्चास्यार्थस्योपोद्बलिका भवति तस्यैष आत्मा विशते ब्रह्मधामेत्यादि ॥१३॥

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीत्यत्र मृत्युना अध्यात्मयोगाधिगमशब्देन समुपदिष्टमुपायम् देवमित्यनेन सूचितमुपेयम् मत्वा धीरः जहातीत्येतैः पदैर्बोधितमुपेतारञ्च सामान्यतोऽवगत्य विशेषतस्तज्ज्ञानाय नचिकेताः पृच्छति-अन्यत्रेति । धर्मात् विधेयतया वेदबोधितात् पुण्यापरपर्यायात् कर्मरूपात्प्रसिद्धात् स्वर्गादिफलकादुपायात् अन्यत्र, अन्यत् तथा अधर्मात् निसिद्धतया वेदबोधितात् पापाऽपरपर्यायात् प्रसिद्धात् नरकादिफलकात्कर्मरूपादुपायात् अन्यत्र भिन्नम् तत्प्रसिद्धमुपायान्तरं यत् त्वं पश्यसि तद्वद उपदिश । प्रसिद्धोपायभूत धर्माधर्मभिन्नमुपायान्तरं यत्पश्यसि त्व तद् विनीताय विशेषतो जिज्ञासवे मह्यं

बोधयेत्यर्थः । अनेन नित्यफलसाधनभूतः उपासनरूपोपायः पृष्टः । अन्यत्रास्मात् कृता कृतात् कृतश्चाकृतश्चेति समाहारद्वन्दः अतएव एकवद्भावः । तस्मादन्यत्र भिन्नम् । अस्मात् अस्मद् बुद्धिकार्यात्मना यदवस्थित तत्कृतम् यच्च कारणस्वरूपेणावस्थित तदकृतमित्युच्यते । सर्वमेव इहलोके परलोके वा प्राप्य वस्तुकार्यरूपम् कारणरूपमेव वा न ततोऽतिरिक्तरूपम् न च तयोरन्यतरस्य द्वयोर्वा प्राप्त्या हर्षशोकपरिहाणं दृष्टचरम्, अतः यत्प्राप्तिः हर्षशोकापहाराय कल्पेन तत्प्राप्यम् कृतादकृताच्चान्यदेव भवेत् तस्य स्वरूपं विज्ञातुं स्पृहयालवे मह्यं सम्यक् वदेति । अनेन परमात्मरूपप्राप्यविषयकः प्रश्नः कृतः । अन्यत्र भूताच्च भव्याच्च । भूतात् अतीतात् कालात्, चकारेण अतीतकालावच्छिन्नात् अपि अन्यत्र अन्यत् । भव्यात् भविष्यतः कालात्, चेन भविष्यत्कालावच्छिन्नादपि अन्यत् । अनेनैव द्वितीयेन चकारेण वर्तमानकालः तत्परिच्छिन्नं वस्तु चोपलक्षितम् अतः वर्तमानकालात् तत्परिच्छिन्नवस्तुनश्च भिन्नम् यद् वस्तु 'धीरः' जहातीत्यनेन च सूचितम् तदुपेतृस्वरूपमेवेति तदपि श्रद्धालवे मह्यमुपदिशेत्यर्थः । अनेन उपेतुः स्वरूपं पृष्टम् । यद्वा भूतात् भव्यात् अस्मात् कृताकृतादन्यत्रेत्यनेन मिलितेन प्राप्यस्वरूपे पृष्टे प्राप्तुः स्वरूपमपि पृष्टं भवति, प्राप्तुः स्वरूपस्यापि प्राप्यान्तर्भावात् । मुक्तिदशायां प्राप्ता स्वीयं ब्राह्मं स्वरूपमपि गुणाष्टकविशिष्टं प्राप्नोत्येव । तस्यापि च कृताकृताविलक्षणत्वकालापरिच्छिन्नत्वञ्च नित्यत्वादेव बोध्यम् । एतन्मन्त्रे उपायोपेत्रोः प्रश्नः तन्त्रेण कृतो नचिकेतसेति द्योतितो भवति ।। १४ ।।

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि-ओमित्येतत् ।।१५।।

एवं पृष्टवतो नचिकेतसः आदरविशेषमुत्पादयितुं मृत्युः प्राप्यमहत्वं वर्णयन् सक्षिप्तं प्रणवोपासन दर्शयति 'सर्वे" इति । सर्वे पूर्वभागापरभागरूपेण विभक्ता. सकला अपि वेदाः श्रुतयः साक्षात् परम्परया वा

यत्पदम् पद्यते गम्यते इति पदम् प्राप्यस्वरूपम् यत्प्राप्यस्वरूपम् आगमन्ति बोधयन्ति । तत्र पूर्वभागस्य कर्तृस्वरूपशक्रादिदेवताप्रतिपादनद्वारा तच्छरीरिणं परमात्मानं बोधयन्तीति परम्परया बोधकत्वम्, परभागस्य तूपनिषद्रूपस्य साक्षात्परमात्मबोधकत्वमिति विवेकः । (तपांसि सर्वाणि) अत्र तपःशब्देन तपःप्रधाना ऋषय उपलक्ष्यन्ते तपः शब्दश्च ज्ञानवाची प्रसिद्धः श्रुतिषु "यस्य ज्ञानमयं तप" इत्यादिषु तथा विज्ञानमेव ये प्राधान्येन समाश्रयन्ते तादृशाः ऋषयः । सर्वाणि सर्वेऽपि सर्वशब्दे विशेष्यसापेक्षो नपुंसकप्रयोगः । सर्वे ज्ञानिनश्च यत् पद प्राप्यस्वरूपं वदन्ति प्रतिपादयन्ति यद्वा सर्वाणि तपांसि कृच्छ्रचान्द्रायणादीनि कर्माणि यत् यदर्थानि परम्परया यत्प्राप्यर्थानि वदन्ति वेदा एव । यदिच्छन्तः यत् प्राप्यस्वरूप इच्छन्तः यत् प्राप्तमभिलष्यन्तो मुमुक्षवः ब्रह्मचर्यम् अष्टविधस्त्रीसङ्गपरित्यागात्मकम् तदुपलक्षितं गुरूपसदनादिकञ्च चरन्ति सम्पादयन्ति तत् प्रसिद्धं पदम् प्राप्यस्वरूप ते तुभ्यं संग्रहेण सक्षिप्तेन शब्देन ब्रवीमि बोधयामि । कोऽसौ संक्षिप्त. शब्दः प्राप्यस्वरूपबोधक इत्यपेक्षायामाह "ओमित्येतत् इति" । यथा घट इत्युक्तमनेनेत्यत्र इति शब्दः घटशब्दस्य स्वरूपपरिचायकः तथा ओमिति इत्यत्र इति शब्दः ओम् इत्यक्षरस्य स्वरूपपरिचायकः, एतच्छब्दस्तु ओंपदस्य विशेषणं सत् प्रत्यक्षविषयत्वमस्य बोधयति तथा एतद् श्रवणजन्यप्रत्यक्षविषयभूतम् ओम् इति अक्षरमेव संक्षेपेण प्राप्यस्य वाचकमित्यर्थः । 'तस्य वाचक प्रणवः (योगसूत्र, "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इत्यादि वचनजातमपि ओङ्कारस्य परमात्मस्वरूपप्राप्यवाचकत्वम् समर्थकम् । एतेन प्रणवप्रतिपाद्यत्वरूपं प्राप्यविभुत्वम् प्रणवोपासनरूपोपायश्च प्रदर्शितः ॥१५॥

एतद्‌ध्येवाक्षरं ब्रह्म एतद्‌ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१६॥

संप्रति प्रणवप्रशंसां मन्त्रद्वयेन करोति । एतत् एव इदमेव ओङ्कार

रूपमक्षरम् ब्रह्म स्वजपादिना ब्रह्मप्राप्तिसाधनमित्यर्थः । ब्रह्मप्राप्तिसाधने ब्रह्मत्वारोपात् प्रणवस्य प्रशंसाऽभिव्यज्यते । "एतद्धयेवाक्षरं परम्" इद-मेव प्रणवरूपमक्षरं जपनीयेषु ध्यातव्येषु च वस्तुषु श्रेष्ठमित्यर्थः । प्रण-वजपस्य तद्ध्यानस्य इतरजपाद्यपेक्षया शीघ्रेण परमात्मप्रतिपत्तिकारक-त्वात् अस्य श्रेष्ठत्व सिद्धयत्ति उभयत्र हि पदम् प्रसिद्धिद्योतकम्, अस्य आ-रोपितब्रह्मत्वं जप्यादिश्रेष्ठत्वञ्च सिद्धं वेदेष्वित्यर्थः । "एतद्धयेवाक्षरं ज्ञात्वा" एतत् अक्षरं प्रणवं ज्ञात्वा समुपास्य यः प्रणवोपासकः यत् वस्तु इच्छति कामयते अनेन मे इदं स्यादिति, तद् वस्तु तस्य सिद्धयति प्राप्तं भवतीत्यर्थः हि पस्मत्रापि पूर्वोक्तार्थम् ।।१६।।

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ।।१७।।

यदालम्ब्य समाश्रित्य परं ब्रह्म दैवतान्तरं समुपास्यते तदालम्बनम् विषय इत्येतत् । यथा गायत्रीं द्वादशाक्षरमप्यक्षरं वा समालम्ब्य परमपुरुषः उपास्यते केनचित् केनचित्तु ओङ्कार एवालम्ब्यते तदुपासने अतः गाय-त्र्यादेरिवोंकारोऽपि आलम्बनं एवं बहुष्वालम्बेषु सत्स्वपि एतद् ओङ्कार-रूपमालम्बनमालम्बनान्तरापेक्षया श्रेष्ठं ध्यानादिक्रियासु । अत एव एतद् ओंकाररूपम् आलम्बनं यस्य तादृशं ध्यानादिकम् अन्यालम्बनध्यानाद्यपे-क्षया परम् उत्कृष्टम् । एतद् ओङ्काररूपम् एव परमपुरुषोपासने आलम्ब-नम् ज्ञात्वा सम्यग् निर्णय तदालम्बनकोपासनविधानद्वारा ब्रह्मलोके ब्रह्मणः श्रीरामाख्यस्य लोके साकेताख्ये महीयते पूज्यते सत्कारपात्र भव-तीति । अत्र 'ओमित्येनेनैवाक्षरेण परमपुरुषमभिध्यायिते" त्यादि श्रुतिश्च भवति । ओङ्कारालम्बनकपरमपुरुषध्यानविधायिनीत्यनुसंधेयम् ।। १७ ।।

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।१८।।

एवमोङ्कारस्य ब्रह्मोपासनायामुत्कृष्टालम्बनत्वमभिधाय उपासकस्य प्रत्यगात्मनः स्वरूपमुपदिशति प्रथमम् "न जायत" इत्यादि मन्त्रद्वयेन। विपश्चित् स्वरूपतो मेधावी, अयमात्मा न जायते नोत्पद्यते, म्रियते अत्रापि नञः सम्बन्धात् न म्रियते न नश्यति वा शब्दस्समुच्चयार्थः तेन च जन्ममरणे नास्य प्रत्यगात्मनो भवत इत्यर्थः। अय प्रत्यगात्मा जीवः कुतश्चित् उत्पादकात्कारणात् न उत्पन्न नास्तीत्यर्थः। उत्पादकमेवास्य न किमप्य· स्तीत्येतत्। 'न जायते" इत्यनेनोत्पत्तिर्निषिद्धा "न कुतश्चित्" इत्यनेन तु उत्पत्तिकारणं निषिद्धमित्युभयथा निषेधस्य नित्यत्वदृढीकरणे तात्पर्य-मतो न पौनरुक्त्यमयमितिध्येयम्। कश्चित् देवमनुष्यादिरूपार्थान्तरभूतोऽपि न बभूव स्वयमपि न कदापि न जात इत्यर्थः। अनेन स्वतोऽप्युत्पत्तिमत्त्व निषिध्यते इति भावः। अयमात्मा अजः अजायमानत्वादेव अज इत्युच्यते इत्यर्थः नित्यः अविनाशित्वादेव च नित्य इति व्यवह्रियते शास्त्रेष्वित्यर्थः शाश्वतः शश्वत् निरन्तरमेकरूपेण तिष्ठतीति शाश्वतः सदैकरूप यतस्त-स्योत्पादको नास्ति यस्य तूत्पादकः स कदाचित् रूपान्तरमप्युपैति। पुनः पुनः क्रियमाणे वस्तुनि रूपान्तरभावस्य दर्शनात् अयं न तथा कदाचिदिति भावः। पुराणः पुरा पूर्वं मनुष्यादिरूपेण कदापि न बभूवेत्ययं पुराणः अनादिः यो हि शाश्वतः स पुराण इति गीयत एवेति भावः। यत एवमयं प्रत्यगात्मा तस्मात् शरीरे शस्त्रादिभिर्हन्यमाने हिंस्यमाने न हन्यते न हिंस्यते शाश्वतनित्यस्य शस्त्रादिघातैरव्यापाद्यत्वात्। शरीरान्तर्गतत्वादस्य शरीर-घाते हननमवर्जनीयम् इति चेत् भ्रान्तोऽसि विनाशशीलमेव तदन्तर्गतं तद्विनाशे विनश्यति नातत्स्वभावम् यथा शरीरान्तःस्थितमाकाशम् तथैव चायमात्मा, अतो न नश्यतीति भावः ॥१८॥

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

हन्ता देहगतस्यापि हन्तृत्वस्यात्मनि अभिमानवान् अहमस्य हन्ताऽस्मी-त्यध्यवसायविशिष्टः कश्चित् हन्तुं मन्यते चेत् 'अहमेनं हन्मि, अहमेनं

ाधिष्यामि' इत्येवं सङ्कल्पयति चेत्, सतः कश्चित् देहात्मदृष्टिः केनचित् ारीरं छिन्नं दृष्ट्वा आत्मानं हतं छिन्नं मन्यते 'अहमनेन हतः' इति सङ्कल्पयति चेत्, तौ आत्मनि हन्तृत्वाभिमानवान् हतत्वाभिमानवानश्च एतौ उभौ ापि न विजानीतः याथार्थ्येन आत्मस्वरूपं नावगच्छत इत्यर्थः । यतः अयं ्ता न हन्ति आत्मानमिति शेषः किन्तु शरीरमेव हन्ति तस्यैव विनाशशीलत्वात्, तथा न हन्यते आत्मा अनेनेति पूरणीयम् । हन्तृत्वाभिमानवता कृतेऽपि शस्त्रप्रहारे आत्मस्वरूपं न विनश्यति नित्यत्वात् अविनाशस्वभावत्वात् च, तस्मात्तौ न सम्यक् आत्मस्वरूपाभिज्ञाविति भावः । इदं मन्त्रद्वयं रमात्मपरतया कैश्चिद् व्याख्यातम् जन्ममरणादिविकाराभावस्य हन्तृहतत्वाद्यभावस्य परमात्मन्यपि सूपपादत्वात्तदिदमनादरणीयम् । "न हन्यते हन्यमाने शरीरे" इति हन्यमान प्राकृतशरीरसम्बन्धित्वनिर्देशस्य उभौ तौ न विजानीतः' इत्यज्ञत्वाभिधानस्य च जीवे एव संगतत्वेन परमात्मपरत्वेऽसंभवद्रूपतया च जीवपरत्वस्यैवोपचितत्वात् । लोकसिद्धहन्तृहतभावभ्रान्तेर्निरासाय अस्य मन्त्रद्वयस्य प्रवृत्तेः तस्याश्च भ्रान्तेः परमात्मनि कस्यचिदप्यभावात् । तस्माज्जीवस्वरूपपरतैवावसेयेति भावः ॥१९॥

अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥२०॥

एवं जीवस्वरूपमुपवर्ण्य तस्याप्यात्मभूतं परमात्मस्वरूपमुपदिशति अणोरित्यादि । अणोः सूक्ष्मरूपव्रीहिसर्षपादिभ्योऽपि सूक्ष्मात् चेतनादपि अणीयान् अतिशयेन सूक्ष्मः, अणुपरिमाणात् जीवानपि व्याप्तुमर्हः । महतः महत्परिमाणवतः पृथिव्याकाशादेरपि महीयान् अतिशयेन महान् पृथिव्याकाशादिकमपि व्याप्तुमर्ह इत्यर्थः । तादृशं किमपि सूक्ष्मं महद्वा वस्तु नास्ति यं परमात्मा व्याप्नोति "अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष मे आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" (छा० ३।१४।३) इत्यादिश्रुतिभिस्तथैव परमात्मस्वरूपस्यावगमादिति भावः । एवंभूत आत्मा सर्वा-

त्मभूतपरमात्मतत्त्वम् अस्य जन्तोः प्राणिजातस्य दृश्यमानस्य । गुहायाम् हृदये निहितः अन्तर्यामितया प्रविश्य स्थितोऽस्ति "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जानानां हृदये सन्निविष्टः" इति श्रुत्यापि प्राणिजातहृदयसन्निविष्टत्वस्य परमात्मनि बोधनात् । तम् परमात्मानम् आत्मनः जीवस्य महिमानम् महत्त्वप्रापकम् सर्वसत्वादिगुणगणाविर्भावकमित्येतत् । अक्रतुः क्रतुप्रभृतिकर्मफलानभिलाषः विषयोपरतमनीषो यः पश्यति साक्षात्करोति सः धातुः विधरणहेतोः 'एष सेतुः विधरण एषां लोकानामसंभेदाये' ति श्रुत्यनुसारात् सर्वविधारकस्य परमात्मनः । प्रसादात् प्रीतिरूपात् तदनुग्रहात् । वीतशोको भवति वीतः विनष्टः शोकः संसारानलतापो यस्य तथा भवति मुक्तो भवतीत्यर्थः ॥२०॥

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥२१॥

अणीयस्त्वमहीयस्त्वरूपविरुद्धधर्माश्रयत्वं पूर्वमन्त्रेण प्रदर्श्यानेन मन्त्रेणापरानपि परस्परविरुद्धान् धर्मान् प्रदर्श्यास्य दुरधिमगत्वं सूचयितुमाह(आसीन इति) । आसीनः उपविष्टोऽपि दूरं व्रजति दूरतरप्रदेशं गच्छति लोके तु न क्वचिदपि आसीनः व्रजत्यपि किमुत दूरं व्रजेत् । शयानः शय्यादौ कृतशयनोऽपि सर्वतः याति सर्वत्र गच्छति, नहि शयानस्य गमनमपि संभवि किमुत सर्वत्र गमनमयं तु विरुद्धक्रियाश्रय इति भावः । मदामदं मदः हर्षः अमदः अहर्षः मदश्चामदश्च मदामदौ यस्यस्तः स मदामदः, अर्श आद्यन्तः । सहर्षमहर्षञ्चेति विरुद्धधर्माश्रयम् । देवं सर्वतो दीव्यमानत्वात् देवः परमात्मा तम् मदन्यः तदनुग्रहविशिष्टमादृशजनादन्यः कः ज्ञातुमर्हति, परस्परनानाधर्माश्रयं परमात्मानं तदीयप्रसादसम्पादितसूक्ष्मबुद्धिः मादृश एव ज्ञातुं प्रभवति नान्य इति भावः । अनेन तदनुग्रहमन्तरेणास्य दुर्विज्ञेयत्वं प्रदर्शितम् । अत्र परस्परविरुद्धधर्माश्रयत्वन्तु परमात्मनः व्यापकत्वात् जीवद्वारा वा संभवतीत्यनुसंधेयम् ॥२१॥

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२२॥

एवं मन्त्रद्वयेन प्राप्यस्य परमात्मनः स्वरूपमभिधाय मन्त्रद्वयेन उपास्यस्वरूपमभिधातुमाह (अशरीरमिति । अशरीरं शीर्यते इति शरीरम् वपुः तद्रहितम् विशरणस्वभावस्य कर्मजन्यत्वेन कर्मणः परमात्मन्यभावेन कर्मजन्यशरीरराहित्यमेवात्र विवक्षितम् अप्राकृतनित्यशरीरवत्त्वस्य तत्र "आदित्यवर्णं तमसः परस्तात्" इत्यादिषु श्रवणात्) । अनवस्थेषु अवस्था सदातनी स्थिति. सा नास्ति येषां तान्यवस्थानि तेष्वनिनश्वरेषु शरीरेषु अवस्थितम् अन्तर्यामितया सकलप्राणिशरीरेषु वर्तमानमित्यर्थः । महान्तम् "महतो महीयानित्युक्तरीत्या" सर्वातिशायिमहत्त्वविशिष्टम् । विभुम् "आकाशवत् सर्वगतश्च नित्यः" इत्युक्तरीत्या सर्वव्यापकम् । आत्मानं परमात्मस्वरूपम् मत्वा समुपास्य भक्तिरूपापन्नदर्शनसमानाकारज्ञानविषयं विज्ञाय धीरः एतादृशज्ञानवान् न शोचति शोकसमुद्रपारं गच्छति सर्वदुःखातिगो भवति ॥२२॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा वृणुते तनूं स्वाम् ॥२३॥

पूर्वमन्त्रे " मत्वा धीरो न शोचती" त्यत्र मत्वाशब्देन परब्रह्मप्राप्त्युपायः सामान्यतः प्रदर्शितः, अनेन मन्त्रेण उपायतयाऽन्यत्र प्रसिद्धस्य श्रवणादेः उपायत्वं प्रतिषिध्य भगवद्भक्तेरेव मुख्योपायत्वं प्रतिपादयति (नायमात्मेति) । अयमात्मा परब्रह्म प्रवचनेन वेदशास्त्रार्थव्याकरणमात्रेण यद्वा प्रवचनेन प्रवचनसाधनभूतेन मननेन केवलेन न लभ्यः प्रवचनस्य तत्साधनेभ्य लक्षणत्वादि न लभ्यः न साक्षात्करणीयः । मेधया केवलया प्रज्ञया निदिध्यासनरूपया वा न लभ्यः । बहुना भूयसा केवलेन श्रवणेन वेदार्थविचारणयापि न लभ्यः कुत इति शंकायामाह–एष आत्मा यमेव साधकं वृणुते प्रार्थयते तेन वरणीयेन साधकेन लभ्यः साक्षात्कार्यो

भवति यतः तस्य वरणीयसाधकस्यैव कृते एष आत्मा परमात्मा स्वाम् तनूम् स्वकीयदिव्यमङ्गलविग्रहं विवृणुते प्रकाशयति साक्षात्कारयोग्यं कुरुते इति यावत्। स एव परमात्मनः वरणीयो भवति यस्तस्य प्रियतमो भवति यस्मिन् स परमेश्वरः प्रसीदतीति यावत्। परमात्मप्रसादश्च परमात्मनि निरतिशयप्रीतिरूपभक्तिमत्येव साधके भवति। तथा च "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्युक्त्यनुसारेण निरतिशयभक्तिमन्तं साधकं परमात्माऽपि तथैव भजते ततः तदनुग्रहवशात् परमात्मानं साक्षात्कृत्य मुक्तो भवति अतः भगवद्विषया निर्मला भक्तिरेव मुख्यः उपायः तत्साक्षात्काराय प्रभवति ततश्च मुक्तिरिति निरवद्यम् ।।२३।।

नाविरतो दुश्चरितात् नाशान्तो नासमाहितः।
नाऽशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ।।२४।।

एवं भक्तिरूपमापन्नस्य निदिध्यासनध्यानाद्यपरपर्यायस्य ज्ञानस्य परमात्मप्रसादसम्पादनद्वारा साक्षात्कारोपायत्वमभिधाय तत्र विघ्नभूतान् कतिचित् धर्मानुपदिशति तत्परिहाणाय (नाविरत इति) दुश्चरितात् श्रुतिस्मृतिप्रतिषिद्धात् परद्रव्यपरस्त्रीहरणप्राणिहिंसनादिरूपात् पापकर्मणः अविरतः अनिवृत्तः प्रज्ञानेन भक्तिरूपापन्नज्ञानेन। एवं परमात्मानं नाप्नुयात् न लभते। तथा अशान्तः इन्द्रियलौल्यात् ग्राम्यभोगपरिष्वक्त्वात् ततोऽनुपरतो यः सोऽपि प्रज्ञानेनैनं नाप्नुयादिति सम्बन्धः। असमाहितः समाधिविशिष्टः समाहितः समाधिश्च मनस एकाग्रता तद्विशिष्टो नास्ति स भवति विक्षिप्तचेताः चेतसश्चविक्षेपः नानाविधव्यापारप्रवणता एवं भूतोऽसमापितोऽपि नैनमाप्नुयादित्यन्वयः। शान्तम् कामक्रोधादिरहितं मनो यस्य तद्भिन्नोऽशान्तमानसः, स समाहितोऽपि समाधिफलकामो भवति, तद्ध्यानादौ क्रोधादिपरिगतश्च भवति कामादिव्यग्रचेताः यः सोऽपि प्रज्ञानेनैनं न प्राप्तुं शक्नोति, तस्मात् दुश्चरितविरतत्वादिरूपप्रज्ञानाङ्गानुष्ठानपरस्यैव प्रज्ञानं सिद्धयति, सिद्धे च तस्मिन् प्रज्ञानेन तेन साधकः परमात्-

मानमाप्नोति नान्यथेति भावः ।।२४।।

यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्थावेदयत्र सः ।।२५।।

ब्रह्म ब्राह्मणः क्षत्रं च क्षत्रियश्च उभे इमे द्वे अपि यस्य परमात्मनः ओदनः भवत अशनम् संह्रियमाणत्वादुपचारःओदनात्वस्येतिभावः। भवतः याताम् । अत्र ब्रह्मक्षत्रपदयोः निखिलचराचरप्रपञ्चस्योपलक्षणत्वात् सर्वमेव जगत् यस्य ओदनशब्दितमुपसंहार्यं भवतीत्यर्थः । संहारकारणया प्रसिद्धो मृत्युरपि यस्य परमात्मनः उपसेचनम् अद्यमानौदनादीनामदने सहायकं दध्यादि उपसेचनमाख्यायते दध्याद्युपसिक्तस्यौदनादेः सरलतया-ऽदनयोग्यताभवनात् तथैव चराचरप्रपञ्चोपसंहारे सहायको मृत्युरुपसेचन-मित्युच्यते, यथा चोपसेचनं दध्यादि स्वयमपि ओदनस्य अत्रा अद्यते तथा मृत्युरपि सहायको भवन् प्रपंचोपसंहारे परमात्मनः स्वयमपि तेन संह्रियते मृत्युसहितः समस्तः प्रपंचो यस्य संहार्यो भवतीति भावः । स सर्वसंहार-कर्ता परमात्मा यत्र स्वे महिम्नि प्रकारे वा अवस्थितः तं महिमानं प्रकारं वा । इत्था इत्थमिति को वेद न कोऽपीत्यर्थः । स यादृशमहिमविशिष्टः यत्प्रकारविशिष्टो वा स महिमा प्रकारो वा तस्य न केनाऽपि वेत्तुं शक्यते, तेनायं परमात्मा अपरिच्छिन्नमहिमा अचिन्त्यप्रकारो वेति भावः ।।२५।।

इति काठकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य
द्वितीया वल्ली ।।२।।

# अथ प्रथमाध्याये तृतीया वल्ली ।

ऋतंपिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः।।१।।

पूर्वमन्त्रे यादृशमहिमविशिष्टः, प्रकारविशिष्टो वा परमात्म तादृशं

परमात्मानं न कोऽपि वेत्तु महंतीत्युक्तम् तेन कश्चिन्मुमुक्षः नैरास्यं न यातु इत्येतदर्थमिन्द्रियजयादिनिमित्तकपरमपुरुषप्रसादतः वेत्तु महंतीति वक्तुं वेद्यवेदकयोरेकशरीरवर्तित्वं प्रथमतः उपपादयति (ऋतमिति)। ऋतम् कर्मफलम् अवश्यम्भावित्वात्कर्मफलस्य सत्यपर्यायकऋतशब्देनोक्तिः। पिबन्तो भुञ्जानौ कर्मफलमनुभवन्तौ इति समुदितार्थः। यद्यपि कर्मफलानुभवितृत्वम् कर्मवश्यस्य जीवस्यैव न परमात्मनोऽतो द्विवचननिर्देशोऽसंगत इवाभाति तथापि लीलारसमनुभवितुं परमात्माऽपि तत्सृष्ट्वा तदेवानुप्राविशदिति-श्रुत्यनुसारेण शरीरं प्रविशतीत्यवगतेः तस्यापि स्वसंकल्पात्मककर्मफलानुभवितृत्वमस्त्येव । यद्वा यथा छत्रिणो यान्तीति व्यवहारः एकस्य छत्रित्वेऽन्येषामछत्रित्वेऽपि भवति तथा एकस्मिन्नेव फलानुभवितरि परस्मिश्चान्तर्यामितया वर्तमानेऽपि पिबन्तौ इति द्विवचननिर्देशःसंगच्छते इति भावः। सुकृतस्य लोके, सुकृतं कर्म तस्य सम्बन्धिनि लोके शरीरे इति जीवपक्षे, परमात्मपक्षे तु सुकृतम् स्वसंकल्परूपम् तत्सम्बन्धिनि लोके मनुष्यशरीरे इत्यर्थः । सुकृतशरीरयोः सम्बन्धश्च साध्यसाधकभावरूपः तेन सुकृतसाध्ये शरीरे इति पर्यवस्यति । गुहां प्रविष्टौ तत्र शरीरे या गुहा हृदयकुहरम् तत्र प्रविष्टौ तदन्तर्गतौ । तत्रापि परमे परार्ध्ये परार्धमर्हतीति परार्ध्यम् परार्धञ्च चरमोऽवधिः संख्यायाः स चावधिः यथा संख्यासु भवत्युत्कृष्टः तथा हृदयकुहरवर्त्याकाशस्याप्युत्कृष्टत्वख्यापनाय परार्ध्यशब्देन कथनमतः परार्ध्ये उत्कृष्टे हार्दाकाशे इत्यर्थः , तत्रापि परमे इति विशेषणं अत्यन्तमुत्कृष्टत्वं बोध्यते तत्र हेतुः परमात्मनः उपलब्धिस्थानत्वमेवास्य हार्दाकाशस्येति । वर्तमानौ इति पदमाक्षिप्य योजनीयम् ततः सुकृतसाध्यमानुषशरीरगतहृदयाकाशे वर्तमानौ जीवपरमात्मानौ स्तः इति उपास्यस्यातिसन्निहितत्वमुपासासौलभ्ये निमित्तमुक्तं भवति ।(छायाऽऽतपौ)छायाशब्देनाल्पज्ञो जीवःलक्ष्यते संसारित्वेन छायासमत्वात् आतपशब्देन च सर्वज्ञः परमात्मा असंसारित्वेनातपतुल्यत्वात् तत्र वर्तमानौ जीवपरमात्मानौ एव प्राप्यप्रापकौ इत्यर्थः । अत्रार्थे सम्वादमुपदर्शयति (ब्रह्मविदो वदन्ति) कृतब्रह्मसाक्षात्का-

सः ये ते वदन्ति हार्दाकाशवर्तित्वमनयोरित्यर्थः । पञ्चाग्नयो ये च त्रिणाचिकेताः त्रिः चितः नाचिकेतोऽग्निर्यैस्ते त्रिणाचिकेताः एवं भूता ये पञ्चाग्नयः गार्हपत्याग्निः दाक्षिणाग्निः आहवनीयाग्निः साम्पराग्नि आवसथ्याग्निः एते पञ्चाग्नयो येषां सन्ति ते पञ्चाग्नयः एतत्पंचाग्निपरिचर्यापरायणा अपि अन्तःकरणशुद्धिद्वारा हार्दाकाशवर्तित्वमनयोर्जानन्ति अतो वदन्तीत्यर्थः ।।१।।

यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ।।२।।

यः यत्परं ब्रह्म ईजानानाम् परमपुरुषोद्देशेन देवतान्तरोद्देशेन वा ये यागादिकर्माचरन्ति तेषां यज्वनाम् सेतुः सेतुर्यथा पारं लम्भयति तथैव परं ब्रह्मापि सर्वान्तर्वर्तितया याज्ञिकान् कर्मफलं लम्भयति अतः सेतुत्वेन रूपितम यत् शब्दे पुल्लिंगता तु सर्वनाम्नामुद्देश्यप्रतिनिर्देश्ययोरन्यतरलिंगभाक्त्वात् श्रौतत्वाद्वा बोध्या यत् अक्षरं क्षरणशून्यम् विकाररहितमिति यावत् परं ब्रह्म श्रीरामाख्यम् । अभयम् एतत् पारमित्यस्य विशेषणम् भयरहितम् सुहृदमिति यावत् । तितीर्षताम् संसाराकूपारं ततुमिच्छताम् पारं तीरम् । एवं भूतं नाचिकेतम् नाचिकेताग्निविद्यासेवया साक्षात्कारद्वारा प्राप्यम् पूर्वोक्तं परं ब्रह्म शकेमहि समुपासितुम् ज्ञातुं प्राप्तुं च वयं समर्था एव भवेमेत्यर्थः । अतः क इत्थावेदय च सः इत्युक्तरीत्या दुरुपास्यत्व दुर्ज्ञेयत्वदुष्प्राप्यत्वबुद्ध्या न हताशैर्भवितव्यमस्माभिरिति भावः ।।२।।

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।।३।।

इमं मंत्रमारभ्य "दुर्गं पथस्तत्कवयोवदन्ती" त्यन्तैः मंत्रैः रथित्वादि रूपककल्पनापुरस्सरमुपासनाप्रकारं प्रदर्शयति (आत्मानमिति) यथा रथः रथस्थपुरुषस्य ग्रामान्तरगमनाय प्रधानसाधनमेवं भोगाऽपवर्गप्रापणाय

जीवस्य प्रधानं साधनं शरीरमेव अतः शरीरं रथत्वेनरूप्यते। शरीरं रथं विद्धि तत्र वर्तमानः आत्मा कर्मवश्यः संसारी तम् रथिनम् रथस्वामिनम् शरीररूपरथस्य स्वकर्मभिरुपार्जकत्वात् विद्धि जानीहि। बुद्धिं सारथिंविद्धि। बुद्धिरत्राध्यवसायरूपा, कर्तव्यमध्यवस्यति पूर्वं ततः प्रवर्तते तस्मात् बुद्धिरेव सारथिः। इन्द्रिपार्श्वे प्रवर्तकत्वस्य मनोद्वारा बुद्धावेव मुख्यत्वात्। अतो बुद्धिशब्दितमध्यवसायं सारथित्वेनावगच्छेत्यर्थः। मनः प्रग्रहो रशना, रशनावबद्धस्यैवाश्वस्य नियन्त्रणं सारथिना शक्यक्रियं भवति। तथा मनः संयुक्तामेवाश्वत्वेतननयितामिन्द्रियाणामध्यवसायेन नियन्त्रणं साध्यसंभवमिति मनःप्रग्रहत्वेन रूपितमिति मनः प्रग्रहं विद्धीति भावः ॥३॥

इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥४॥

हयैर्गतिमद्भिरन्यत्र रथं नयति सारथिः तथैव चक्षुरादीन्द्रियैः स्वस्व व्यापारपरैरेव करणैरिदं शरीरं देशान्तरे भोगायापवर्गाय वाध्यवसायो नेतुमर्हति तस्मादिन्द्रियाणि हयत्वेन रूपितानि। इन्द्रियाणि ज्ञानेन्द्रियकर्मेन्द्रियोभयरूपाणि हयान् आहुः अश्वा इति वदन्तीत्यर्थः। अश्वा हि मार्गमादायैव देशान्तरं नयन्ति रथम्। तथैव विषयमादायैव इन्द्रियाणि प्रवर्तमानानि शरीरं नयन्ति देशान्तरमिति विषयेषु मार्गत्वरूपणम् तेषु हयत्वेन रूपितेषु इन्द्रियेषु गोचरान् मार्गान् विषयान् शब्दादीन् एव आहुः रूपककल्पनापटवः। शरीरेन्द्रियसंघातसंबन्धे सत्येव भोक्तृत्वमात्मनो भवति नान्यथेत्यत्र मनीषिसंवादं दर्शयति (आत्मेन्द्रियमनोयुक्तम्) आत्मा अत्र शरीरम् इन्द्रियं ज्ञानकर्मेन्द्रियरूपम् चक्षुरादिवागादि च मनः संकल्पविकल्पकारि तया प्रसिद्धमेव। मनः शब्देन चाध्यवसायोऽपि लक्ष्यते अध्यवसायं विना संकल्पमात्रेण प्रवृत्त्यनुपपत्तेः, एतैः शरीरेन्द्रियमनोध्यवसायरूपैः सन्घातैः युक्तम् सहितमेव आत्मतत्वं भोक्ता इत्याहुः कथयन्ति मनीषिणः विवेकिनो जनाः एतत्संघातयोगरहितस्य केवलस्य आत्मनः ज्ञातृत्वसत्वेऽपि कर्तृत्वं

भोक्तृत्वञ्च नैव भवति-इति भावः ।।४।।

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ।।५।।

यः रथित्वेन रूपितः शरीराधिष्ठाता जीवः । अविज्ञानवान् विज्ञानं यत्र विवेकात्मकोऽध्यवसायस्तदस्यास्तीति विज्ञानवान् तद्भिन्नः अज्ञानवान् विवेकात्मकध्यवसायरूपसारथिरथिरहितः भवतितथा अयुक्तेन अप्रगृहीतेनमनसा सदायुक्तो भवति मनः प्रग्रहरहितश्च सर्वदा भवति। तस्य रथित्वेनरथितस्यात्मनः इन्द्रियाणि अश्वत्वेन रूपितानि अवश्यानि शब्दादिविषयरूपकुमार्गात्नियंत्रितुमशक्यानि भवंति । ईदृशस्यैवात्मनः इन्द्रियाणि विषयाभिमुखानितेऽवाधावन्ति येन संसाराऽकूपारे स पतति । अत्र दृष्टान्त माह दुष्टाश्वाइवसारथेरिति । दुष्टा अदान्ताः प्रग्रहसारथिरहितस्य अश्वा अनियंत्रिता एव भवन्ति अतस्ते दुष्टा इत्युच्यन्ते तादृशा अश्वाः लोकप्रसिद्धस्य रथवाहकस्य सारथेरवश्याः यथा भवन्ति तथेत्यर्थः । ततश्चरथस्थो गन्ता यथा गर्ते पतति तथा अवश्येन्द्रियस्य संसारसमुद्रपातोऽवश्यं भावीति–भावः ।।५।।

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ।।६।।

यस्तु रथी आत्मा विज्ञानवान् विवेकात्मकाध्यवसायवान् भवति सदा निरन्तरं युक्तेन प्रगृहीतेन समाहितेनेतियावत् मनसा, संकल्पात्मकेन युक्तः सहितः मनोरूपप्रग्रहवान् भवति तस्य ईदृशसारथिप्रग्रह विशिष्टस्यात्मनः रथिनः इन्द्रियाणि वश्यानि वशवर्तीनि भवन्ति अतो येन संसारोदधौ न निमज्जति, अत्र दृष्टान्तं दर्शयति सदश्वा इव सारथे निपुणमते दृढप्रग्रहवतः सारथेः रथचालकस्य सदश्वाः सन्तः विवेकेन दृढप्रग्रहनियन्त्रित्वेन सत्पथगन्तारः अश्वाः यथा वशे भवन्ति तद्वत् इत्यर्थः ।।६।।

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥७॥

यस्तु विज्ञानवान् भवति स मनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥८॥

अश्वेन रूपिणामिन्द्रियाणां वशीकरणेऽवशीकरणे च यद्भवति तत्प्रदर्शयति श्लोकद्वयेन (यस्त्वेति) यः रथित्वेन रूपित आत्मा, अविज्ञानवान् अविवेकयुक्तः अमनस्कोऽनिगृहीतमनाः तत एव हेतोः सदा सर्वदा अशुचिः विषयचिन्ताप्रवणतया मलिनान्तःकरणो भवति सः तादृश आत्मा तत्पदम् पद्यते इति पदम् प्राप्यम् तत् प्रसिद्धम् पूर्वोक्तं परमात्मतत्वं साकेताख्यं देशविशेषमित्यर्थः न आप्नोति न लभते प्राप्तव्यप्राप्त्यभाव एव न केवलं किन्तु अनर्थोऽपि तस्य भवतीत्याह संसारं चाधिगच्छति संसारं जन्ममरणचक्ररूपम् अधि आधिक्येन पौनः पुन्येन गच्छति प्राप्नोतीत्यर्थः ॥७॥

यस्तु रथी आत्मा विज्ञानवान् विवेकात्मकाध्यवसाययुक्तः समनस्कः प्रगृहीतमना अतएव सदा निरन्तरं शुचिः परमात्मतत्वचिन्तामग्नतया पवित्रान्तःकरणः भवति तत एव हेतोः सः तादृशमनोध्यवसाययुक्तः तत्पदं परमपुरुषरूपं प्राप्यम् अप्राकृतदेशरूपं साकेताख्यं स्थानं वा आप्नोति लभते । यस्मात् सम्प्राप्तात् पदात् च्युतिरहितः सन् भूयः पुनः न जायते संसारचक्रे न पततीत्यर्थः ॥८॥

बिज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥९॥

विज्ञानं पूर्वोक्तबुद्धिरूपम् सारथिर्यस्य तादृशः विवेकयुक्तमनोरूपःप्रग्रहः तद्वान् वशीकृतमनाः यो नरः उपासको जीवः स अध्वनः संसारचक्ररूपस्य मार्गस्य पारं पारभूतम् विष्णो श्रीरामाख्यस्य भगवतः तत्प्रसिद्धं साकेतनाम्ना पदम् स्थानमप्राकृतदेशविशेषम् परमात्मतत्वं वा श्रीरामाख्यम् आप्नोति यतः पुनः संसारसागरे नागच्छतीति भावः ॥९॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धि बुद्धेरात्मा महान् परः ॥१०॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥११॥

वशीकृतेन्द्रियमनोबुद्धिरेवोपासकः परमपदमुपगच्छतीति "स तु तत्पदमाप्नोती"त्यन्तेन प्रतिपादितम् सम्प्रति रथादिरूपितशरीरादिषु वशीकरणे किं कस्मात्प्रधानम् किंपर्यन्ता च वशीकार्यतेति प्रतिपादयितुमाह (इन्द्रियेभ्यः इति) इन्द्रियेभ्यः चक्षुरादिभ्यः वागादिभ्यश्च हयत्वेन रूपितेभ्यः अर्थाः शब्दादयः विषयाः गोचरत्वेन रूपिताः पराः वशीकरणे प्रधाना प्रबलाः इति यावत् विषयोपस्थितो वशीकृतेन्द्रियाणामपि क्षोभदर्शनात् अर्थेभ्यः शब्दादिभ्यश्च मनः प्रग्रहत्वेन रूपितम् संकल्पविकल्पात्मकमिन्द्रियम् परम् प्रबलम् यतः उपरतावपीन्द्रियव्यापारस्य असन्निहितेऽपि चार्थे मनः विषयसंकल्पप्रवणं भवत्येव यदि न वशीकृतम् । मनसोऽपि अपेक्षया वशीकरणे बुद्धिरध्यवसायरूपा सारथित्वेन रूपिता परा प्रबला वशीकृतमनसामपि विषयाध्यवसायेन संसारगर्तनिपातस्य सौमर्यादीनां शास्त्रतोऽवगमात् । बुद्धेरप्यपेक्षया आत्मा रथित्वेन रूपितःशरीराधिष्ठाता परः प्रबलः तस्य कर्तृत्वादिविशिष्टतया बुद्ध्याद्यपेक्षयाप्रबलत्वात् स एव चात्मा महान् वशीकार्यतायाम् बुध्याद्यपेक्षया अतिप्रबल इत्यर्थः । तदिच्छाधीनत्वात् बुद्ध्यादिव्यापाराणाम् । महतः परमव्यक्तम् महतः बुद्ध्याद्यपेक्षयाऽतिप्रबलात् शरीराधिष्ठातुरात्मनोऽपेक्षया अव्यक्तम् भूतसूक्ष्मपरिणामभूतम् रथत्वेन रूपितम् शरीर परम् वशीकरणे प्रधानम्, शरीराऽभावे शरीराधिष्ठातृत्वेनाभिमतस्याऽत्मनोऽपि प्रवृत्तीनां पुरुषार्थगोचराणामसम्भवित्वात् शरीरस्यैव धर्मादिसाधने प्रधानत्वात् त्रिगुणात्मकशरीरसत्वे आत्मनि वशीकृतेऽपि गुणानुगुण्येन प्रवृत्तीनामवश्यंभावाच्च । ननु च आत्मानं रथिनं विद्धीति रूपकप्रकरणे ये बुद्ध्यादयो गृहीतास्तेषामत्रवशी-

करणप्रकरणे स्वशब्देनैव ग्रहणमस्ति शरीरस्य वाचकं किमपि पदमत्र नास्तीति कथं शरीरस्य प्रधानत्वमात्मापेक्षयोच्यत इति चेच्छरीरवाचकपदाभावेऽप्यव्यक्तशब्दवाच्यभूतसूक्ष्मपरिणामरूपस्य शरीरस्यैव परिशेषादत्रग्रहणसंभवात् सांख्याभिमतस्य प्रधानस्याव्यक्तशब्देनात्र ग्रहणे कारणाभावाच्च । अव्यक्तात्पुरुषः परोऽव्यक्तं शरीरं परिशेषादेव, तस्मादपि परः प्रधानः पुरुषः सर्वान्तरात्मभूतः परमपुरुषः श्रीरामाख्यः, स ह्यन्तर्यामितयोपासकस्यापि स्थितिप्रवृत्तिहेतुर्भवति स्वसंकल्पद्वारा, साधनान्तराणि समाश्रयमाणोऽपि साधकस्तत्प्रसादमन्तरेणाकर्मण्य एव भवति पुरुषार्थेषु, शरीरमपि तत्सङ्कल्पवशेनैव क्वचिद् व्यावर्त्तुं पारयेद् विषये नान्यथा, यदा तु सर्वदहनसर्ववहनशक्त्यभिमानवतो वह्निवाय्वादीनामपि तृणादिदहनादिव्यापारोऽवरुध्यते तथा वराकस्य शरीरस्य, तस्मादव्यक्तशब्दवाच्यशरीरात्परत्वं युक्तमेव परमपुरुषस्य । ननु पुरुषापेक्षयापि किमपि भवेत्प्रधानं वशीकरण इति शङ्कायां निषेधमाह—पुरुषान्नपरं किञ्चित् । पुरुषात्परमपुरुषाच्छ्रीरामात् किञ्चिदपि परं श्रेष्ठं वशीकार्यतायां नास्ति, वशीकृते हि श्रीरामाख्ये परब्रह्मणि किमपि वशीकर्तव्यमेव नावशिष्यते यत्प्रधानमप्रधानं वा स्यात् सर्वस्य परमपुरुषवश्यत्वात् स यस्य वशीभूतस्तस्य किमपरमवशिष्येतावशीकृतमिति भावः । तस्य सर्वस्वतन्त्रस्य परमपुरुषस्य वशीकरणे च शरणागतिरेवाश्रयणीया, सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम । "तमेव शरणं गच्छ सर्वभावेन भारत" इत्यादि तदीयवाक्येभ्यस्तथावगमात् । पुरुषान्न परं किञ्चिदित्यत्र हेतुमाह— सा काष्ठा स पुरुष एव वशीकार्यतायाः काष्ठा । चरमोऽवधिरित्यर्थः, काष्ठाशब्दलिङ्गापेक्षया तच्छब्दोऽपि स्त्रीलिङ्गतया निर्दिष्टः सर्वनाम्न उद्देश्यविधेयान्यतरलिङ्गभावत्वस्वभावात् । तस्य चरमावधित्वे हेतुमाह—सा परा गतिः । अत्रापि तच्छब्दो गतिशब्दापेक्षया स्त्रीलिङ्गः । सा स परपुरुष एव परा सर्वतः श्रेष्ठा । चरमेति यावत् । गम्यते इति गतिः प्राप्य इत्यर्थः । श्रीरामस्यैव परमप्राप्यत्वात्तस्मिंश्च शरणागत्या वशीकृते किमपि वशीकरणीयं नास्त्येव तस्मात् स एव वशीकरणस्य काष्ठा चरम उपायः । चरम उपेयश्च स एवेति भावः ॥१०॥११॥

**एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥**

**यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेज् ज्ञान आत्मनि ।**

एष चरमोपायत्वेन चरमप्राप्यत्वेन च पूर्वमन्त्रे निर्दिष्टः परमपुरुषः श्रीरामः सर्वेषु भूतेषु गूढः स्वयोगमायासमावृत आत्माऽऽत्मतया वर्तमानः सर्वात्मभूतोऽपि त्रिगुणात्मकस्वमायया समाच्छन्नो न प्रकाशतेऽवशीकृतेन्द्रियाणां स्थूलबुद्धीनाम् । तथापि सूक्ष्मबुद्धिभिः सूक्ष्मार्थविवेचनशक्तिसम्पन्नबुद्धिशालिभिर्जितेन्द्रियैरग्र्यया श्रेष्ठयैकाग्र्यवत्याऽत एव सूक्ष्मया सूक्ष्मार्थविवेचनशक्तिमत्या बुद्ध्या करणेन दृश्यते । साक्षात् क्रियत इत्यर्थः । गूढोत्मेत्यत्र गूढ आत्मेति समासे पृषोदरादित्वादात्मशब्दाकारस्योकारो गुणश्च ॥१२॥

वशीकर्त्तव्यतायां यदपेक्ष्य यस्य प्राधान्यं तदुक्त्वा संप्रति वशीकरणरीतिमुपदिशति-यच्छेदिति । प्राज्ञः सूक्ष्मार्थविवेचनचतुरबुद्धिर्जनो वाग्वाचमित्यर्थः । द्वितीया विभक्तेश्छान्दसो लुक् । मनसी मनसीत्यर्थः । इकारस्य सप्तम्येकवचनस्य छान्दसं दीर्घत्वम् । वाक्पदमपरेषामपीन्द्रियाणां चक्षुरादीनामुपलक्षणम् । तथा च बुद्धिमाञ्जनः सर्वाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च स्वस्वविषयेभ्यः समाकृष्य प्रथमं मनसि यच्छेदुपसंहरेन्नियमयेदिति यावत् । इन्द्रियाणां मनसि नियमनन्तु मनस आनुकूल्येन प्रवर्तनम् , मनसः प्रातिकूल्येन प्रवृत्तिराहित्यापादनञ्च । एतदेव च मनोरूपप्रग्रहविशिष्टत्वमिन्द्रियाश्वानाम् । प्रग्रहावबद्धा अश्वास्तदानुकूल्येनैव प्रवर्तन्ते न विपरीतमिति दृष्टचरं मनः प्रग्रहनियन्त्रिता इन्द्रियाश्वा अपि न विषयाभिमुखं प्रवर्तेरन्निति वशीकृता भवेयुरेवेत्यभिप्रायः । तन्मन आत्मनि ज्ञाने यच्छेदात्मनीत्यौपश्लेषिकाधारे सप्तमी तेनात्मगते ज्ञाने धर्मभूते बुद्धिशब्दवाच्ये यच्छेदध्यवसायानुकूलतयैव यथा मनः प्रवर्तेत तथा कुर्यादित्यर्थः । ज्ञानपदेनाध्यवसायात्मकबुद्धेर्विवक्षणात् । आत्मनि ज्ञान इत्येवं व्यधिकरणकथनेन ज्ञानस्यात्मत्वं परैरङ्गीकृतं निरस्तं भवतीति ध्येयम् । मनसोऽध्यवसायानुकूलवृत्तिकरणे स्वातन्त्र्येण सङ्कल्पासमर्थत्वाद् विषयप्रवणता न-

**ज्ञानमात्मानि महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि १३**

**उत्तिष्ठत जाग्रत प्राप्यवरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥१४॥**

स्यादेतदेव मनसो वशीकृतत्वन्नामेतिभावः । ज्ञानमात्मनि महति नियच्छेज्ज्ञानमध्यवसायात्मकन्तन्महत्यात्मनि जीवस्वरूपे नियच्छेज्जीवस्वरूपमात्रविषयकतया नियन्त्रयेदध्यवसायो जीवमात्रालम्बने यथा भवेत् तथा नियमनं कार्यमित्येवास्य ज्ञानस्य वशीकरणं नाम तदा बुद्धिर्जीवात्मातिरिक्तविषयावलम्बिनी न भवतीति भावः । तद् यच्छेत् शान्त आत्मनि तत् तमित्यर्थश्छान्दसत्वात् लिङ्गव्यत्यासः । तं महान्तमात्मानं जीवस्वरूपमिति यावत् । शान्ते षड्र्मिरहित आत्मनि परमपुरुषे यच्छेत् तत्प्रयत्नतामापादयेद् यद्वा तच्छेषतामापादयेत् परमपुरुषप्रपन्नतैव तच्छेषतैव वा जीवस्य वशीकरणं परमपुरुषप्रपत्त्यैव रथिनो जीवस्य गन्तव्याध्वपारभूतपरमप्राप्तिर्नान्यथेति जीवात्मानं परमपुरुषशरणागतं कुर्यादिति भावः ।१३॥

एवं वशीकरणरीतिमुपदर्श्याधिकारवत उपासकानुत्साहयति–उत्तिष्ठतेति । अनाद्यविद्यायां सुप्ता हे उपासका उत्तिष्ठत विषयारामं परित्यजतात्मज्ञानाभिमुखा भवतेत्यर्थः । जाग्रत अनर्थमूलभूताज्ञाननिद्रां नाशयत । वरान् श्रेष्ठान्नात्मतत्त्वज्ञानचयानित्यर्थः प्राप्याभिगम्य विधिपूर्वकं तच्छरणे गत्वा निबोधत, तेनोपदिष्टमात्मतत्त्वं विज्ञेयं तदवगच्छत नात्रोपेक्षा विधेयेति भावः । आचार्योपगमने हेतुमुपदिशति तदात्मतत्त्वज्ञानं दुर्ग दुर्गमं दुःखसम्पाद्यम् । पथः पन्थानं मार्गमिति यावत् । पथ इत्यत्र वचनव्यत्यासश्छान्दसः । कवयस्तत्त्ववेतारो जना वदन्ति । कथमिव दुर्गममितिशङ्का निराकृतये क्षुरधारात्वेन तत्त्वज्ञानमार्गं रूपयति–तत्तत्वज्ञानं निशितातितीक्ष्णाऽत एव दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्यास्तादृश्यानुल्लङ्घनीयेत्यर्थः । एवं भूता क्षुरस्यायुधविशेषस्य धाराग्रभागस्तत्त्वज्ञानमार्गोऽतितीक्ष्णक्षुरधारावद् दुःसंचारोऽतस्तत्त्वविदाचार्योपगमनं विना

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्यु मुखात्प्रमुच्यते॥**
**नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्। उक्त्वा**
स्वातन्त्र्येण तदर्थं यत्ने क्रियमाणे कियत्यप्यनवधानेऽनर्थसंपातः स्यात्। आचार्यद्वारैवात्मतत्त्वं विज्ञेयमिति भावः ॥१४॥

एवमधिकारिणमुपासकं प्रोत्साह्य मत्वा धीरो शोचतीत्यत्रोक्त ज्ञानमेव निचाय्य शब्देनोपसंहरन् ज्ञानफलमपि दर्शयितुमाह — अशब्द-मित्यादि। अशब्दं न शब्दो यत्र तादृशं भौतिकशब्दशून्यम्। तथाऽस्पर्शं भौतिकस्पर्शरहितम्। अरूपं प्राकृतरूपशून्यम्। तथाऽरसं भौतिकरस-रहितम्। अगन्धवत्प्राकृतगंधशून्यम्। यत्प्राकृतशब्दस्पर्शादिवत् तत्पृथिव्यादि दृष्टमनित्यमेतत्परमात्मतत्वन्तु तच्छून्यमत एवाव्ययं न व्येत्युपचयापचयादिविकारमाप्नोति तदव्ययमित्युच्यते, इदन्तु विकाररहितत्वादव्यय मित्यर्थः। अत एव च नित्यमुत्पादविनाशरहितम्। सदैकरूपमित्यर्थः। अनाद्यनन्तं न विद्यते आदिः कारणं यस्य तदनादि, अन्तयतीत्यन्तो विनाशकः स न विद्यते यस्य तदनन्तमुत्पादकविनाशकरहितमित्यर्थः। महतो जीवात्मनः सकाशादपि परं विलक्षणम्, सूक्ष्मजीवस्वरूपादप्यतिसूक्ष्मम्, यद्वा महतो जीवादपि परं भिन्नमित्यर्थः। 'महत्यात्मनि' इत्यादौ महच्छब्दसामानाधिकरण्येन जीवस्य ग्रहणादत्रापि महच्छब्देन प्रतीतिरेव कार्या। ध्रुवं स्वरूपस्वभावाभ्यां विकाररहितं स्थिरमितियावत्। एवंभूतं तत्परमात्मस्वरूपं निचाय्य साक्षात्कारविषयं कृत्वा मृत्युमुखान्मृत्योर्मृत्युचक्रभयंकरस्य संसारस्य मुखं प्रधानं कारणं कामकर्मादिरूपाविद्याख्यं तस्मात्प्रमुच्यते मुक्तो भवति सर्वबन्धविनिर्मुक्तो भवतीति यावत् ॥१५॥

एतत्संवादोपदेशश्रवणयोरपि फलमानुषङ्गिकं दर्शयति मन्त्रेणानेन-नाचिकेतमिति। नाचिकेतसा प्राप्तं नाचिकेतं मृत्युना यमेन प्रोक्तं कुतश्चिद् ब्रह्मवादिनो मुखाच्छ्रुत्वा नचिकेतस उपदिष्टं न तु स्वयमेव कृतं तत्र हेतुमाह—यतः सनातनं प्रवाहरूपेण सदा अपौरुषेयमित्यर्थः।

श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥

य इमं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पते इति ॥१७॥

इति तृतीया वल्ली । इति कठोपनिषद् प्रथमोऽध्यायः ॥१॥

अथ द्वितीयोऽध्यायः

पराञ्चि खानि व्यतृणत् स्वयंभूः
तस्मात् पराङ् पश्यति नान्तरात्मन् ।

उक्त्वा कस्मैचिदधिकारवते शिष्यायोपदिश्य श्रुत्वा कुतश्चिद् ब्रह्मवादिनः सकाशात्तच्छ्रावणप्रत्यक्षं कृत्वा च ब्रह्मलोके ब्रह्मणो लोको ब्रह्मलोकः सत्यलोकस्तत्र महीयते पूज्यते सत्क्रियत इत्यर्थः । महीङ्पूजायामिति धातुः ॥१६॥

यो जनः प्रयतः शुद्धः सन् परमं गुह्यमतिशयेन गुप्तमिदं मया प्रोक्तं नाचिकेतमुपाख्यानमाख्यायिकां ब्रह्मसंसदि ब्रह्मणः सभायां श्रावयेत् प्रवदेत् । स इत्यध्याहार्यम् । स श्रावको जन आनन्त्यायानन्तफलाय कल्पतेऽनन्तफलयोग्यो भवति । श्राद्धकाले वा प्रयतः सन् यदि तच्छ्रावयेत् तर्हि तच्छ्राद्धकर्माप्यानन्त्यायानन्तफलाय योग्यं भवेदक्षय्यं भवेदित्यर्थः ॥१७॥

इति श्री भगवद्रामानन्दाचार्यविरचिते कठोपनिषद्भाष्ये प्रथमोऽध्यायः ॥१॥

—o—

एकत्रैव सहेन्द्रियकलापैरन्तरात्माऽपि तिष्ठति तथापि तं न सर्वो जनः पश्यति तत्कस्य हेतोरितीममर्थं विविच्य प्रागुक्तं परमात्मतत्त्वं विवेचयितुमाह—खानि । खमाकाशं छिद्रमिति यावद् । यद्युक्तत्वादिन्द्रियाण्यपि खानि प्रोच्यन्ते तानि पराञ्चि परानन्तरात्मभिन्नान्बाह्यानर्थान् प्रत्यञ्चन्ति प्रकाशनाय गच्छन्तीति पराञ्चि बाह्यविषयाणि कृत्वा व्यतृणद् हिंसितवान् । हिंसा चात्रेन्द्रियाणामन्तरात्मप्रकाशनसामर्थ्यविरह एव । यद्वा व्यतृणदकरोत्,—बाह्यार्थप्रकाशकान्येव खानि कृतवानित्यर्थः । तृहधातोर्हि सार्थकस्यापि करोत्यर्थस्वीकाराद् धातूनामनेकार्थत्वात् । एवं सृष्टवानित्यत्राह—स्वयंभूः स्वयं भवतीति स्वयंभूः सर्वस्वतंत्रः । परमात्मेत्यर्थः, अत एव कथमेवं सृष्टवानिति प्रश्नस्यापि नावकाशः

**कश्चिद्धीरः प्रत्यगात्मानमैक्षत्**
**आवृत्तचक्षुरमृतत्वमिच्छन् ॥१॥**

**पराच कामाननुयन्ति बाला-**
**स्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीराः अमृतत्वं विदित्वा**
**ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥२॥**

काशः । स्वतंत्रस्य पर्यनुयोगानर्हत्वादिति भावः । तस्मात् परार्थप्रकाशकस्वभावत्वाद्धेतोस्तैः करणभूतैः खैर्लोकः पराङ्पराग्रूपानर्थान् शब्दादीन् पश्यत्युपलभते, अन्तरात्मन्नन्तरात्मानं न पश्यति । छान्दसो द्वितीयालोपः पराङित्यत्र । एवं स्वभावेष्वपि लोकेषु कश्चिद्धीरः प्रागुपार्जितपुण्यभारप्राप्तपरमात्मप्रसादोऽधिकारी बुद्धिमाञ्जीवोऽमृतत्वमिच्छञ्जातमोक्षाभिलाष आवृत्तचक्षुरावृत्तं विषयेभ्यः प्रत्याहृतञ्चक्षुर्यस्यतादृश ः। चक्षुःपदमिन्द्रियान्तरस्याप्युपलक्षणमतः समाकृष्टेन्द्रियग्रामः सन् प्रत्यगात्मानं प्रति प्रतिकूलं विषयेभ्योऽञ्चतीति प्रत्यक् स चासावात्मा प्रत्यगात्मा तं परमात्मानमित्यर्थः । स्वभावत एव परमात्मनो विषयप्रतिकूलवृत्तिमत्वात् । ऐक्षत् पश्यति छन्दसि कालाविवक्षणात् तत एव परस्मैपदमपि बोध्यम् । नहीन्द्रियाणि सन्तीति सर्वैः परमात्मा द्रष्टुं शक्यः किन्तु लब्धतदीयप्रसाद एवेति भावः ॥१॥

अल्पज्ञाः स्वकीयमनर्थमपि विज्ञातुं न प्रभवन्त्यतो विषयेष्वासक्ता भवन्ति धीमन्तस्तु तथा नेति वदति—पराच—इति । ये बाला अर्थानर्थविवेचकबुद्धिविहीनास्ते पराचो बाह्यान् कामान् कामनाविषयभूतान् स्रक्चन्दनवनितादीननुयन्ति तानेव हितकृतो विज्ञाय तेषु सज्जन्ते, अतो विततस्य विस्तृतस्य मृत्योर्जन्ममरणादिरूपस्य संसारस्य पाशं बन्धनं यन्ति प्राप्नुवन्ति । अथ मृत्युपाशाद् विलक्षणमित्यर्थो यदमृतत्वं मुक्तिमपुनरावृत्तिलक्षणं ध्रुवं निश्चितं विदित्वा विज्ञाय धीरा विवेकिनोऽध्रुवेषु विनश्वरेषु कामेष्विह संसारचक्रे संभविषु कमपि कामं न प्रार्थयन्ते न कामयन्ते प्रत्युत तत्तत् सर्वकामनानिवृत्तेस्तेषु लुब्धा न भवन्तीत्याशयः ॥२॥

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यते-एतद्वै तत् ॥३॥**
**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥४॥**
**य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं**

येन "तद्देवाः ज्योतिषां ज्योतिः" "श्रोत्रस्य श्रोत्रं मनसो मनो-यत्" इत्यादि श्रुत्युक्तदिशा सर्वप्रकाशकेनेत्यर्थः, एतेनैव प्रत्यगात्मभूतेनैव परमेश्वरेण सर्वोऽपि लोको रूपं रसं गन्धं शब्दान् स्पर्शान् मैथुनान् मिथुनप्रयुक्तान् सुखविशेषानुपलक्ष्यमिदमन्यवस्तूनामपि तेन सर्वाञ्ज्ञेयान्— पदार्थान् परमात्मनैव प्रकाशितान् लोकः पश्यतीत्यर्थः । अत्र परमात्मनि प्रकाशके प्रकाशनाय समुद्यते किमप्रकाशितं परिशिष्यते। न किमप्यप्रकाशितं तिष्ठतीत्यर्थः । एतद्वै प्रत्यगात्मस्वरूपमेव तत् पूर्वं नचिकेतसान्यत्र धर्मा-दित्यादिना यत्पृष्टं-तद्विष्णोः परमं पदमित्यादिना च यत्प्रत्युक्तं तदित्यर्थः । दुर्विज्ञेयस्वभावतया तस्यार्थस्य पुनस्तदेव विविच्यत इतिभावः ॥३॥

स्वप्नान्तं स्वप्नमध्यस्थं स्वप्नकालीनमिति यावत् । जागरितान्तं जाग्रद्दशामध्यस्थं जाग्रत्कालीनञ्चोभौ स्वाप्नजाग्रत्कालीनार्थौ येन सर्वप्रकाश-केन परमात्मनैव साधनेन लोकोऽनुपश्यति तं महान्तं सर्वान्तरात्मभूतं विभुं व्यापिनमात्मानं परमेश्वरं मत्वा साक्षात्कारविषयतां नीत्वा धीरो बुद्धिमान् शोचति शोकस्य पारं न गच्छतीत्यर्थः । इन्द्रियसत्वेऽपि परमात्मैव लौकि-कार्थज्ञानस्यापि मुख्यं साधनमिति भावः ॥४॥

य उपासको मधु कर्मफलं मधुवन्मधुरतयाऽऽपाततः प्रतीयमा-नत्वात् तदत्ति भुङ्क्ते इति मध्वदस्तं कर्मफलभोक्तारमिदमित्यत्र लिङ्ग-व्यत्ययश्छान्दसः । इममित्यर्थः । जीवं जीवात्मानं वेद जानाति, तथाऽ-न्तिकात्समीपस्थं हृदयगुहारूपैकदेशस्थं भूतभव्यस्यातीतकालीनवर्त-मानकालीनस्योपलक्षणविधया भविष्यत्कालीनस्य च सर्वस्य चिदचिद्वस्तुन ईशानं नियन्तारं परमात्मानञ्च वेद सम्यग्विजानाति स जनस्ततस्तमित्यर्थः । कश्चिदपि न विजुगुप्सते न निन्दतीत्यर्थः । आत्मपरमात्मोभयज्ञानवन्तं न

**भूतभव्यस्य ततो न विजुगुप्सते एतद्वै तत् ॥५॥**

**यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत एतद्वै तत् ॥६॥**

**या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य**

कोऽपि निन्दति । तस्य सर्वपूज्यत्वप्रत्यभिज्ञानादिति भावः । यद्वा ततस्तदनन्तरमात्मपरमात्मज्ञानप्राप्त्यनन्तरमिति यावत् । स उभयज्ञाता जनो न विजुगुप्सते कमपि न निन्दति । यतः स सर्वमप्येकात्मकं विजानातीत्यर्थः । एतद्वैतन्मन्त्रप्रतिपाद्यमेव तत्पूर्वोक्तं विष्णोः परमपदमित्यर्थः पूर्ववत् ॥५॥

यो हिरण्यगर्भः पूर्वं व्यष्टिसृष्टेः प्रागद्भ्यो जलेभ्य उपादानभूतेभ्योऽजायत उत्पन्नः "हिरण्यगर्भः समवर्तताग्रे" इत्यादिश्रुतेः "अप एव ससर्जादौ तासु वीर्यमवासृजत । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिन् जातः स्वयं ब्रह्मा सर्वलोकपितामहः" इति स्मृतेश्च । तं तपसः परमपुरुषसंकल्परूपात्, "यस्य ज्ञानमयं तपः "इति श्रुतेः, पूर्वं जातं सर्वलोकपितामहं हिरण्यगर्भं गुहां व्यष्टिसृष्टिहृदयकुहरं प्रविश्य तिष्ठन्तं वर्तमानं सर्वव्यष्टिशरीरव्यापकमित्येतद् । भूतेभिर्भूतैः शरीरेन्द्रियरूपकार्यकारणसंघातैर्विशिष्टं यः परमात्मा व्यपश्यत पश्यति, हिरण्यगर्भं पश्यत जायमानमिति श्रुतेरयं व्यष्टिरूपसकलप्रपञ्चकर्ता भवत्वित्येवं रूपेण पश्यतीत्यर्थः । एतदेषः परमात्मैव तत्पूर्वपृष्टं परमप्राप्यस्वरूपमित्यर्थः ॥६॥

अत्ति कर्मफलानि भुङ्क्त इत्यदितिः कर्मफलभोक्ता जीवो देवतामयी देवैरधिष्ठितत्वाद् देवता इन्द्रियाणि तत्प्रचुरतया देवतामयीन्द्रियाधीनकर्तृत्वभोक्तृत्वादिमतीत्यर्थः, प्राणेन संभवति प्राणवायुना सह तिष्ठति । गुहां प्रविश्य तिष्ठन्ती हृदयगुहान्तरे वर्तमाना, भूतेभिः पृथिव्यादिभूतैः शरीराकारपरिणतैर्युक्ता, व्यजायत देवमनुष्यादिरूपविविधाकाररूपेण जायत जाता, स्वरूपतो जीवस्य नित्यत्वेऽपि कायाकारपरिणतभूत-

तिष्ठन्तीः या भूतेभिर्व्यजायत, एतद्वैतत् ।।७।।

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।
दिवे दिवईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ।।
एतद्वैतत् ।।

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति। तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन । एतद्वैतत् ।।९।।

विशिष्टतया जन्मात्र प्रोक्तमिति भावः । यतः परमपुरुषतत्वाद् देवादिरूपेण जीवस्य भवनं तदेतत्परमात्मतत्वं तत्पूर्वोक्त परमप्राप्यस्वरूपमेवेत्यर्थः । यद्वा एतदेतन्मन्त्रप्रतिपाद्यजीवस्वरूपमपि तत्पूर्वोक्तपरमप्राप्यब्रह्मात्मकमेवेत्यर्थः। "क्षेत्रज्ञं चापि मां विद्धीत्यादावपि क्षेत्रज्ञस्य मदात्मकत्वकथनात् । ब्रह्मजज्ञशब्दवाच्यजीवस्य ब्रह्मजज्ञं देवमीड्यमित्यस्य देवात्मकत्वोक्तेश्चेति भावः ।।७।।

परमपुरुषप्राप्तिसाधनतया प्रथममुक्तो नाचिकेताग्निस्तस्यापि ब्रह्मात्मकत्वमुपदिशति—अधियज्ञं जातवेदा अग्निररण्योरुत्तराधरारण्योर्मध्ये निहितः स्थितोऽस्ति योऽग्निर्गर्भिणीभिरन्तर्वर्तिनीभिर्गर्भ इव सुभृतो ऋत्विग्भिरितिशेषः। यथाऽशनपानादिभिर्गर्भिणीभिर्गर्भः सुष्ठु भृतः पालितो भवति तथैवाधियज्ञमग्निर्याज्ञिकैः पालितो भवति तन्निर्वाणे दोषश्रवणात् । दिवे दिवे प्रतिदिनञ्जागृवद्भिर्जागरूकैः प्रमादरहितैरित्येतद् । हविष्मद्भिराज्यादिहविर्युक्तैर्मनुष्येभिर्मनुष्यैर्याज्ञिकविप्रैरित्यर्थः । ईड्यः स्तोतुमर्होऽग्निरग्रमुत्कृष्टं लोकं नयति प्रापयति यजमानमित्यग्निरग्रनेता । एतन्मंत्रप्रतिपादितमग्निस्वरूपमपि तदात्मकं पूर्वोक्तपरब्रह्मात्मकमेवेत्यर्थः ।।८।।

यतः परस्माद् ब्रह्मणः सूर्य उदेति प्रकाशते, यत्र च परमात्मनि सूर्योऽस्तं गच्छति निम्लोचनं याति । देवा अग्नीन्द्रवरुणादयः सर्वेऽपि तं परमात्मानमर्पिता अरा इव रथनाभौ तत्रैव स्थितिं गताः । प्रतिष्ठिता इत्येतत् । कश्चन कश्चिदपि पदार्थस्तत्परं ब्रह्म नात्येति तं नातिक्रामत्येव ।

**यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१०॥**

**मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योः स**

तदुल्लंघ्य स्वतन्त्रतया न किमपि वर्तेत इत्यर्थः । एतन्मन्त्रप्रतिपाद्यपरमात्मस्वरूपमेव तत्पूर्वोक्तपरमप्राप्यमित्यर्थः ॥९॥

एवं यन्मन्त्रत्रयेण जीवानामग्नेः सूर्यादिदेवानाञ्च ब्रह्मात्मकत्वं प्रतिपादितं तत्रेह लोके स्थितानां जीवानां ब्रह्मादीनाञ्च य आत्मा स एव परलोकगतादित्यादीनां कथमात्मा संभवति, इहाहमस्मि, अमुत्रदेवाः सन्तीत्येवं विभिन्नदेशतया प्रतीयमानेष्वात्मतया परमात्मन एकस्य संभवित्वादित्यतो विभिन्नदेशकालवर्तिष्वात्मतया सत्वमस्य व्यापकस्य नित्यस्य नासंभवमितिदर्शयितुमाह—यदेवेहेति । इहास्मिन् लोकेऽहमित्यनुसन्धीयमानानां जीवानामात्मभूतं यदेव परमात्मतत्वममुत्र परलोकेऽप्यहमित्यनुसन्धीयमानानां देवादीनामात्मभूतं तदेव परमात्मतत्वम् । एतदेव द्रढयितुमाह- यदमुत्र तदन्विह । अमुत्र परलोकोऽहमित्यनुसंधीयमानदेवादीनामात्मभूतं यत्परमात्मतत्वमिह लोकेऽहमाकारप्रत्ययगोचरजीवानामात्मभूतं तदनु तदेव परमात्मतत्त्वमित्यर्थः । सर्वात्मभूतपरमात्मतत्वे भिन्नता नास्तीति भावः । एवमवर्तमानमपि परमात्मभेदं यो मन्यते स संसारसमुद्रे मज्जतीत्याह-यो लोक इह परमात्मनि नानेव नानात्वमिव भेदमिवेति यावत् । पश्यति जानाति मन्यत इत्येतत् । स परमात्मभेददर्शी मृत्योर्मरणात् पश्चादपि मृत्युं मरणं प्राप्नोति पौनःपुन्येन संसारं प्रविशति । इवशब्देन परमात्मतत्वस्य वस्तुतो नानात्वं नास्तीति द्योत्यते ॥१०॥

परमात्मनः सर्वात्मत्वे सर्वैरनुभूयमानता जीवात्मवत् तस्यापि स्यादित्यत आह-मनसैवेदमिति । इदं सर्वात्मभूतं परमात्मतत्वं मनसैव फलामभिसंध्या क्रियमाणकर्मभिर्यस्य मनो विशुद्धं कामक्रोधरागद्वेषादिशून्यत्वाद्भवति तेन पुंसा तादृशमनसैव परिज्ञेयं नान्यतोऽतो नास्माभिः सर्वे-

**मृत्युमाप्नोति य इह नानेव पश्यति ॥११॥**

**अङ्गुष्ठमात्रः पुरुषो मध्ये आत्मनि तिष्ठति । ईशानो भूतभव्यस्य ततो न विजुगुप्सते ॥१२॥**

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स एव श्वः, एतद्वैतत् ॥१३॥**

रनुभूयमानता तस्य भवतीति भावः । इह परमात्मस्वरूपे किञ्चन नाना नास्ति नानात्वं भेदः कश्चिदपि नास्ति । तथाप्यविशुद्धमना योऽसदपि नानात्वं तत्र पश्यति स मृत्योर्मृत्युमाप्नोति । जन्ममरणचक्रे पतितस्तिष्ठतीत्यर्थः ॥११॥

यः पुरुषः परमात्मा मध्य आत्मन्युपासकशरीरे हृदयपुण्डरीक उपासकमनुग्रहीतुमंगुष्ठमात्रोऽङ्गुष्ठपरिमाणः सन् तिष्ठति वर्तते स भूतभव्यस्य कालत्रयवर्तिसमस्तचिदचित्पदार्थस्येशानो नियामकः सन्नस्तीति शेषः । सः परमपुरुष उपासके वात्सल्यात् ततो देहमध्यस्थेभ्यो दोषेभ्यो न विजुगुप्सते । जुगुप्सां न प्राप्नोति । वात्सल्येनेतरेऽपि जना मलिनमपि स्वपुत्रादि स्वगेहादि वा न त्यजन्ति तत्र तेषां जुगुप्साया अभावात् । एतद् वै एतन्मन्त्रप्रतिपाद्यपरमात्मतत्वमेव पूर्वं प्रतिपादितं विष्णोः परमम्पदमित्यर्थः॥ १२॥

अधूमको धूमरहितमित्यर्थः । छान्दसं पुल्लिङ्गत्वम् । ज्योतिस्तेजोधातुरिव शुष्केन्धनप्रदीप्यमानवह्निरिव सदा प्रकाशमानः पुरुषः परमात्माङ्गुष्ठमात्रोऽङ्गुष्ठपरिमाणः सन्नुपासकशरीरगतहृत्कमलमध्यवर्ती सन् भूतभव्यस्य कालत्रयवर्तिचिदचित्पदार्थस्येशिता स एवाद्य वर्तमानेऽपि स एव श्वो भविष्यत्कालेऽपि स एव नियन्तेत्यर्थः । उपलक्षणमेतदतीतकालस्यापि । अथवा, अद्य एतत्कालीनचिदचिद्वस्तु श्वो भविष्यत्कालीनचिदचिद्वस्तूपलक्षणतोऽतीतकालीनचिदचिद्वस्तु च स एव । तदात्मकमेव सर्वमित्यर्थः । एतद्वैतदेतन्मन्त्रप्रतिपाद्यं सर्वनियन्तुः परमात्मतत्त्वमेव तत्पूर्वोक्तविष्णोः पदमित्यर्थः ॥१३॥

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥१४॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥

दुर्गे—दुर्गमे, उच्छ्रिते शिखरप्रदेशे वृष्टं सिक्तमुदकं जलं पर्वतेषु शिखरापेक्षया निम्नप्रदेशेषु पर्वतेषु प्रत्यन्तपर्वतेषु यथा विधावति विशीर्य विविधरूपेण पतति निर्झरनदीप्रभृतिरूपेणाधोगच्छतीति यावत् । एवं तथा धर्मानात्मसम्बन्धिनः सर्वान्तरत्वसर्वान्तर्यामित्वसर्वप्रकारत्वसर्वात्मत्वादीन् पृथग् भिन्नभिन्नदेवाद्यधिकरणगतान् पश्यन् विजानन् तानेव यद्धर्मविशिष्टाधिकरणगतान् पश्यति तानेव धर्मान् देवत्वमनुष्यत्वादीननु दुर्गवृष्टोदकमनुकृत्य विधावति तेषु तेषु देवमनुष्यादियोनिषु गच्छति पुनः पुनः संसारगर्तं प्रविशतीत्यर्थः ॥१४॥

शुद्धे निर्मले जले आसिक्तं योजितं शुद्धं जलं यथा तादृगेव भवत्यधिकरणीभूतशुद्धजलसदृशमेव न ततो विपरीताकारमेवं शुद्धजलमिव विजानतो मननशीलस्यात्माऽपि विशुद्धे परमात्मन्यासिक्तो नियोजित इत्येतत् । परमात्मज्ञानेन विशुद्धो भूत्वा विशुद्धेन परमात्मना समानाकारो भवत्यपहृतपाप्मत्वादिगुणाविर्भावतः तत्सदृशो भवति । हे गौतम हे नचिकेतः सम्बोधनमेतच्छिष्ये कृपां हर्षं वा द्योतयितुमुक्तम् ॥१५॥

इति भगवद्रामानन्दाचार्यविरचिते कठोपनिषद् आनन्दभाष्ये

द्वितीयाध्यायस्य प्रथमा वल्ली ॥२।१॥

## अथ द्वितीयाध्यायस्य द्वितीया वल्ली

पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥१॥

पुरसाम्याच्छरीरमपि पुरमित्युच्यते । पुरे हि द्वाराणि यथेच्छसंख्यानि पुरनिर्मात्रा विहितानि शरीरेऽप्येकादशद्वाराणि तत्रास्यभवानि द्वाराणि सप्त चक्षुर्द्वयं श्रोत्रद्वयं नासाद्वयं मुखञ्चैकमिति । नाभिर्गुदोपस्थौ चेत्येवं त्रीण्यधोद्वाराणि । मूर्धगतञ्चैकमिति भवन्त्येकादशछिद्ररूपाणि द्वाराणि । द्वारेषु द्वारपाला अपि पुरे नियुक्ता भवन्ति तेऽत्र चक्षुरादीन्द्रियाण्येव तेषामधिपतयोऽपि भवन्ति तेऽत्र चक्षुराद्यधिष्ठातृदेवता आदित्यादयः सन्ति । प्राकारास्तत्र भवन्ति तेऽत्र त्वङ्मांसरुधिरमज्जामेदोऽस्थिस्नायव एव सप्त सन्ति । अतः पुरोपकरणदर्शनात् पुरमिदं शरीरम् । पुरस्वामी तु जीवो येन परमात्मना स्वामित्वेन नियुक्तः स परमात्मा अजो जन्ममरणादिविकारशून्यः पुरस्वामिनो जीवस्य कर्मसम्बन्धेन शरीरद्वारा जन्मादिमत्त्वेऽपि न परमात्मनस्तथा कर्मसम्बन्धाभावात् । एवं स परमात्मा अवक्रचेताश्चेतोऽत्र ज्ञानं तद्वक्रं भवति कर्मकृतसंकोचाद् यथा जीवस्य, कर्माभावेन तु तत्कृतसंकोचो न कदापि परमात्मज्ञानेऽतोऽजस्यावक्रचेतसः परमात्मनः कृते पुरमेतदनुष्ठाय सव्यापारं शरीरमिदं भगवदर्थं विधाय न शोचति अभयप्राप्त्या शोकावसराभावाद् । विमुक्तो रागद्वेषादिभिः शोकमूलभूतैरिहैव रहितस्सन् प्रारब्धावसानसमये प्रकृतिसम्बन्धता विमुच्यते सर्वबन्धविनिर्मुक्तो भवतीत्यर्थः । एतदेव पुरस्वामितया जीवस्य नियोजयितृस्वरूपमेव तत् पूर्वोक्तं विष्णोः परमं पदमित्यर्थः । यद्वा पुरस्वामी राजा यथा भिन्नो भवति तथा शरीराच्छरीरस्वामी जीवो विलक्षण एवेत्यनुष्ठाय विविच्य ज्ञात्वा न शोचति विमुक्तश्च विमुच्यते आगवदेवार्थः । कीदृशस्य पुरस्वामिनः पुरमित्यत्राह—अजस्यावक्रचेतसो जन्मादिविकाररहितस्य अकुटिलबुद्धेर्विवेकवत इत्यर्थः । शरीरात्माभिमानं परित्यज्य रागद्वेषादिरहितः सन् सर्वप्रकृतिसम्बन्धविमोक्षद्वारा शोक-

**हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥**

रहितो भवतीति भावः । अत्र पक्ष एतद्वैतदित्यस्यैतन्मुक्तात्मस्वरूपं तदेव परमात्मात्मकमेवेत्यर्थः ॥१॥

चिदचिदात्मकसर्वपदार्थस्य परब्रह्मात्मकत्वं प्रतिपादयितुमाह–हंस इत्यादि । शुचौ निर्लेपत्वात् पवित्र आकाशे सीदतीति शुचिषदादित्यात्मना आकाशे वर्तमानो हंसो हन्ति गच्छतीति व्युत्पत्त्या सूर्यः । अन्तरिक्ष आकाशस्यैकदेशविशेषे सीदति वर्तते इति अन्तरिक्षसत् । वासयति सर्वानिति वसुर्वायुः । वेद्यां सीदतीति वेदिषद् वेद्युपरि वर्तमानो होता ऋत्विगग्निर्वा तस्यापि वेद्यां वर्त्तमानत्वाद् । वेदिरत्र पृथिवी विवक्षिता अग्निर्वैहोता इयं वेदिः परोन्तः पृथिव्या इति श्रुतेः । अतिथिः सोमो दुरोणसद् दुरोणेषु कलशेषु सीदतीति दुरोणसत् । यद्वा दुरोणे गृहे-सीदतोति व्युत्पत्या गृहं प्रतिसमागतो ब्राह्मणोऽतिथिः । नृषद् नृषु मनुष्येषु सीदतीति नृषत् मनुष्ययोनौ वर्तमान इत्यर्थः । वरसद् वरेषु देवेषु सीदतीति वरसद् देवयोनौ विद्यमानः । ऋतसदृते सत्यलोके तिष्ठतीति ऋतसत् सत्यलोके वर्तमानः । यद्वा ऋते यज्ञे सीदति वर्तमान इति ऋतसद् यजमान इत्यर्थः । व्योम्नि परमाकाशे परमपदे सीदतीति व्योमसत् परमपदस्थो मुक्तात्मेत्यर्थः । अप्सु जाता अब्जा जलोत्पन्नाः शंखमीनमकरादयः । गोजा गवि पृथिव्यां जाता गोजा भूम्यामुत्पन्ना व्रीहियवादयस्तरुलतौषधिप्रभृतयश्च । ऋते आकाशे जाताश्चिरस्थिततयाऽऽकाशस्यापि सत्यपर्यायिकऋतशब्दवाच्यत्वात् । यद्वा ऋताद् यज्ञाज्जाता यज्ञोत्पन्नाः तत्फलभूतस्वर्गादिलोकस्था ऋतजाः । अद्रिभ्यः पर्वतेभ्यो जाता अद्रिजा नदीप्रभृतयः । सर्वमेवैतद् बृहदपरिच्छिन्नं महदित्येतत् । यदृतं सत्यं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । तदात्मकमित्यर्थः । हंसमारभ्याद्रिजपर्यन्तं यद्यत् प्रदर्शितमिह तस्य सर्वस्याप्यात्मा परं ब्रह्मेति भावः । एतेन सर्वपुरवर्तित्वमस्य प्रतिपादितं भवति ॥२॥

ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वेदेवा उपासते ॥३॥
अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥४॥
न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥

यः सर्वहृदयदेशवर्त्ती परमात्मा प्राणं प्राणवायुमूर्ध्वमूर्ध्वप्रदेशमुन्नयति प्रापयति । अपानमपानवायुं प्रत्यगधोमुखमस्यति क्षिपति । मध्ये हृदयकमलमध्ये आसीनं वर्तमानं वामनं हार्दाकाशपरिमाणतया ह्रस्वपरिमाणम् । यद्वा वामनं भजनीयं तं परमात्मानं सर्वेदेवा उपासते भजन्ति । देवा इति सत्वप्रकृतिमतामुपलक्षणं तेन सत्वप्रकृतयः सर्वेऽपि जीवा देवमनुष्यादयस्तमुपासत इत्यर्थः ॥३॥

एवं पूर्वमन्त्रोक्तरीत्या हृदयकमलस्थं प्राणापानादिगतिव्यवस्थापकं परमात्मानं यः सत्वप्रकृतिः समुपास्ते तस्यास्य समुपासकस्योपासनाद्वारा कृतपरमपुरुषसाक्षात्कारस्य शरीरस्थस्य देहिनो जीवस्य किमत्र परिशिष्यते कर्तव्यमितिशेषः । न किमपि करणीयं तस्य तिष्ठतीत्यर्थः । देहिन इत्यस्यैव विशेषणं शरीरस्थस्येति विस्रंसमानस्येति च देहिनो देहे द्विविधास्थितिर्दृढतया शिथिलतया च । यौवन आद्या वार्द्धके तु शिथिला । देहस्य दृढत्वशैथिल्याभ्यां जीवस्य स्थितौ दृढत्वशैथिल्ये कल्प्येते कृतब्रह्मसाक्षात्कारो हि दार्ढ्येन शैथिल्येन वा तिष्ठतु शरीरे किं तेन अनवशिष्टकरणीयत्वात् तस्येतिभावः । एतावदेव न किन्तु स म्रियते चेत्तथापि नो हानिरित्याह—देहाद्विमुच्यमानस्य स यदि मरणोन्मुखो भवति तदापि न कर्तव्यं किमपि तस्यावशिष्टमितिभावः । एतद्वैतदेतन्मंत्रप्रतिपाद्यं कर्तव्यावशेषरहितात्मस्वरूपमपि तदात्मकमेव पूर्वोक्तपरमपुरुषात्मकमेवेत्यर्थः ॥४॥

प्राणिनां जीवनं प्राणाधीनमितिलोके प्रसिद्धं तन्न युक्तं किन्तु परमात्मैव तु जीवनकारणमिति वदति—न प्राणेनेति । कश्चन मर्त्यः कोऽपि मरणधर्मा जीवः प्राणेन प्राणवायुना जीवतीति न, यद्यपि प्राणवायुसंगमो

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥६॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम् ॥७॥

देहेन जीवनहेतुरितिप्रसिद्धं तथापि नैतद्युक्तमित्यर्थः । तथा अपानेन अपान-वायुना न कश्चिन् मर्त्यो जीवति केन तर्हि जीवत्यत्राह—इतरेण तु जीवन्ति इतरेण प्राणापानव्यतिरिक्तेन केनचिज्जीवनहेतुना सर्वे मर्त्या जीवन्ति। स क इत्यत्राह—यस्मिन्नेतावुपाश्रितौ एतौ प्राणापानौ लोके जीवनहेतुतया प्रसिद्धा-वपि यस्मिन् सर्वात्मभूते परमपुरुषे उपाश्रितौ स्वजीवनाय यमाश्रितवन्तौ यत्संकल्पेन प्राणापानौ स्वस्वव्यापारकरणसमर्था भवतः । यदधीनमेव प्राणा पानजीवनमितियावत् । स परमपुरुषः श्रीराम एव मर्तव्यानामपि जीवनहेतुरिति भावः ॥५॥

हन्तेत्यव्ययं हर्षद्योतकम् । हर्षश्चाधिकारसम्पन्नशिष्यलाभात् । हृष्टो मृत्युः पूर्वोक्तमपि परमात्मस्वरूपं विशेषेण वक्तुं प्रतिजानाति दुर्विज्ञे-यत्वादस्य वस्तुनः शिष्यस्य चाधिकारिविशेषेण कृपापात्रत्वात् । यथास्य सम्यग् बोधो भवेत् तथा स्वयमेव विवक्षा मृत्योर्जातेतिभावः । ते तुभ्यं नचिकेतसे कामनारहिताय शिष्यायाधिकारिणे इदं मद्बुद्धिस्थं यत्पूर्वं मयोपदिष्टं गुह्यमतिरहस्यं सनातनं सदाभवं पुराणं ब्रह्म प्रवक्ष्यामि प्रकर्षेण वक्ष्याम्युपदेक्ष्यामि यथा सुखेनावबोधस्ते भवेदित्यर्थः । हे गौतम मरणं मृत्युं देहवियोगं प्राप्य लब्ध्वात्मा जीवो यथा भवति परमात्मज्ञानाभावाद् यां यां योनिं प्रपद्यते तदपि च प्रवक्ष्यामीत्यर्थः । गौतमेति सम्बोधनेन तदुपरि महती कृपा द्योत्यते । ६॥

सनातनब्रह्मप्रवचनं पूर्वं प्रतिज्ञातं मरणानन्तरजीवस्थितिवचनन्तु पश्चात् तथापि ब्रह्मविषये वक्तव्यस्य बहुत्वादत्र चाल्पत्वात् सूचीकटाह-न्यायेन पूर्वं मरणानन्तरभवामज्ञानिजीवगतिमेवाहानेनमन्त्रेण—योनि-मित्यादिना । अन्ये ब्रह्मज्ञानरहिताः कतिचन जीवाः शरीरत्वाय ब्रह्म-

**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वैतत् ॥८॥**

**अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥९॥**

णादिशरीरपरिग्रहाय पूर्वकर्मानुसाराद् योनिं मनुष्यादियोनिं प्रपद्यन्ते शुक्रशोणितयोगेन योनिं प्रविशन्तीत्यर्थः। अन्ये तु ततोऽप्यतिपापशीलाः ते यथाकर्म पूर्वकृतस्वकर्मानुसारेण येन यादृशं कर्म कृतं तदनुसारेणेत्यर्थः। यथाश्रुतं श्रुतं श्रावणं ज्ञानमिति यावत्। अनतिक्रम्य यथाश्रुतं येन यादृशं ज्ञानमर्जितं तदनुसारेणेत्यर्थः। स्थाणुं वृक्षादिस्थावरभावमनुसंयान्ति मरणानन्तरं प्राप्नुवन्ति अत्यन्ताधमाः स्थावरभावं तत उत्कृष्टाः पशुपक्ष्यादियोनिं तत उत्कृष्टा मनुष्यादियोनिं प्राप्नुवन्ति मरणानन्तरमित्यर्थः ॥७॥

संप्रति प्रतिज्ञातं सनातनं ब्रह्मोपदिशति—यः पूर्वोपक्रान्तः पुरुषः परमात्मा सुप्तेषु स्वप्नावस्थां प्राप्तेषु सर्वेषु जीवेषु कामं कामं संकल्पं संकल्पं निर्मिमाणः स्वाप्नान् पदार्थान् रथाश्वादीन् सृजञ्जागर्ति जीववत् स्वप्नावस्थां न प्राप्नोतीत्यर्थः। तदेव शुक्रं सर्वतः शुभ्रं प्रकाशकमिति यावत्। तद् ब्रह्म तत् स्वप्नावस्थायामपि जाग्रद् ब्रह्म न ततोऽन्यद् ब्रह्मेत्यर्थः। तदेव अमृतं निरुपाधिकामृतत्वशालि, तेन मुक्तनित्यमुक्तानां व्यावृत्तिस्तेषां निरुपाधिकामृतत्वरहितत्वात्। यद्वा अमृतममृतवन्निरतिशयभोग्यभूतमनवधिकानन्दरूपत्वादुच्यते कथ्यते सर्वेषु शास्त्रेषु। तस्मिन् परमपुरुषे संकल्पमात्रेण स्वाप्नवस्तुसर्जके सर्वे लोकाः पृथिव्यादयः श्रिताः कृताश्रयाः सन्तः तिष्ठन्ति तस्य सर्वलोककारणत्वात्। तदु तत् सर्वात्मभूतं ब्रह्म उ एव कश्चन कोऽपि नात्येति नातिक्रामति। ब्रह्मातिक्रम्य न कोऽपि लोको वर्तते कारणातिक्रमेण कार्याणामवस्थित्यदर्शनादितिभावः। ८॥

एवं प्रतिपादिताऽपि परमात्मनः सर्वात्मता दुर्विज्ञानतया बहिर्दृष्टान्तेन दृढीकर्तुमाह—अग्निर्यथेति। यथाऽग्निस्तेजः पदार्थ एकोऽपि भुवनं भुवनान्तर्गतपञ्चीकृतभूतभौतिकपदार्थजातं काष्ठादि प्रविष्टः पञ्चीकरणरीत्या

**वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूषं प्रतिरूपो वभूवः ॥१०॥**
**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैः बाह्य-**

काष्ठादिसकलपदार्थान्तगतः सन् रूपं रूपं वीप्सायां द्विवचनं रूपपदञ्च भौतिकपदार्थाकारपरम्–प्रतिभौतिकपदार्थमित्यर्थः, प्रतिरूपः प्रतिगतं व्याप्तं रूपं यस्य स प्रतिरूपः सर्वत्र व्याप्तस्वरूपः प्रतिरूपः काष्ठादिरूपसदृशरूपश्च वभूव काष्ठाद्यन्तर्गतो वह्निस्तत्र प्रदीप्तो यदा भवति तदा बहिरपि काष्ठाकारसमानाकारः कौटिल्यार्जवादिविशिष्टो भवत्यन्तर्वहिश्च दारुव्याप्तो भवतीतियावत्। तथैव सर्वभूतान्तरात्मा सर्वेषां भूतानामभ्यन्तरात्मा प्रतिवस्त्वन्तर्यामिरूपेणावस्थितः परमात्मा रूपं रूपमिति पूर्ववदर्थः प्रतिरूपः प्रत्युक्तान्तर्यामिस्वरूपोऽपि देवमनुष्यादिसरूप इव भवति। वहिश्चाकाशवत् सर्वरूपेषु व्याप्तोऽपि। "अन्तर्बहिश्च भूतानां व्याप्य नारायणः। स्थितः" इति स्मृति समर्थितश्चायमर्थः ॥९॥

बाह्यापेक्षया सूक्ष्मेणवायुरूपेण दृष्टान्तेन तदेव सर्वान्तरात्मत्वं परमात्मनः पुनर्दृढयति । व्याख्यानन्तु पूर्ववत्। पञ्चीकरणप्रक्रियया वायोर्ब्रह्मावपि प्रविष्टत्वेन ब्रह्मापेक्षयाऽस्य दृष्टान्तस्य सूक्ष्मत्वमिति ध्येयम्। यथा वायुः भुवनान्तर्गसर्ववस्तुषु अन्तर्वहिश्च व्याप्य तिष्ठति परमात्माऽपि अन्तर्वहिश्च सर्ववस्तुषु व्याप्यवर्तेत इति भावः ॥१०॥

परमात्मनः सर्वत्रान्तर्वहिश्च वर्तित्वे जीवात्मन इव तस्यापि सुखदुःखादिप्रसक्तिः कथं नेति शंकां दृष्टान्तद्वाराऽपाकरोति–सूर्य इति सूर्य । आदित्यः सर्वलोकस्य सर्वश्चासौ लोको जीवजातमित्यर्थः, । तस्य चक्षुश्चक्षुरिन्द्रियाधिष्ठाता "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदि" त्यादिश्रुतिभिः सूर्यस्य चक्षुरन्तर्गततयाधिष्ठातृत्वावगमात्। चाक्षुषैश्चक्षुःसम्बन्धिभिर्वाह्यदोषैर्वहिर्भवा वाह्या दोषाः काचकामलयो मलादयश्च तैश्चक्षुष उपरिभागे वर्तमानैरपि दोषैरेतैर्यथा न लिप्यते न स्पृश्यते तथा सर्वभूतान्तरात्मा सर्वेषां भूतानामात्मभूतः सर्वान्तर्गतोऽपि एक एव भूतगतैर्दोषैर्न लिप्यते। एतेनभूतान्तर्गतजीवानां भूतदोषलेपसत्वेऽप्यस्यैकस्यैव न लेप इति जीववैलक्षण्यं द्योतितं

दोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥११॥

**एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥**

भवति, भूतगतविकारेऽपि न लेप इति जडवैलक्षण्यमपि द्योतितं भवति। कुतो न लिप्यत इत्यत्र हेतुमाह—लोकदुःखेन बाह्यः । लोकस्य जीवजातस्य दुःखं कर्माधीनं भवत्यस्य तु न तदकर्मवश्यत्वादतो लोकदुःखेन बाह्यो बहिर्भूतः स्वाभाविकापहतपाप्मत्वादितया विलक्षण इतियावत् । यद्वा लोकदुःखेन न लिप्यते यतो बाह्यः स्वेतरसमस्तविलक्षण इत्यर्थः कार्यः । तस्मान्न जीवात्मन इव सुखदुःखप्रसंगोऽत्र भवतीतिभावः ।।११॥

यतोऽयं न लोकदुःखसंस्पृष्टस्तस्मादेतद्विज्ञानाच्छाश्वतसुखप्राप्तिरिति दर्शयति । योऽयं परमात्मा स एक समाभ्यधिकद्वितीयरहितः "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतिप्रसिद्धश्चास्य स्वसमाभ्यधिकद्वितीयराहित्यरूपमेकत्वम् । वशी, वशो वशीभूतः स्वाधीन इति यावत् । समस्तः प्रपञ्चोऽस्यास्तीति वशी, यदधीनं समस्तं चिदचिदात्मकञ्जगत् तादृश इत्यर्थः । तत्र हेतुमाह—सर्वभूतात्मरात्मा सर्वेषां भूतानां चिद्चिद्रूपाणामन्तरात्मा, अन्तर्गतः सन्नियन्तेत्यर्थः । सर्वान्तर्यामित्वादेव जगदस्य वशेऽस्तीति भावः । अयमेव हि सर्वस्य कारणमित्यपि दर्शयितुमाह—एकं बीजं बहुधा यः करोति । यः परमात्मैकं स्वेनाविभागदशां गतमत एकमित्युच्यते बीजं कारणं प्रधानं बहुधा महदादिविकारस्वरूपेणानेकं करोति, अविभागदशापन्नतयैकीभूतमपि प्रधानं यो नानाकारेण करोति स्वसंकल्पमात्रेणेतिभावः । तं परमात्मनम् । आत्मस्थम् "य आत्मनि तिष्ठन्नि" त्यादिश्रुत्यनुसारेण जीवान्तर्गतं ये धीरा बुद्धिमन्तः । अनुपश्यन्ति श्रवणानन्तरं साक्षात्कुर्वन्ति तेषां धीराणामेव शाश्वतं शश्वद्भवं सदातनमिति यावत्, सुखं भवति मुक्तिर्भवितीत्यर्थः । य आत्मस्थं परमात्मानं न साक्षात्कुर्वन्ति तेषां साक्षात्कारविहीनानान्तु शाश्वतसुखं नास्त्येव । बाह्यविषयेष्वासक्तबुद्धयः स्वात्मस्थमपि परमात्मानं न पश्यन्ति अतः तेषां कृते अशाश्वतरूपा दुःखसंभिन्ना संसृतिरेवास्तीतिभावः ॥१२॥

**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्॥**
**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्। कथं तु**
**तद्विजानीयां किमु भाति विभाति वा ॥१४॥**

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतः कुतोऽयमग्निः।**

नित्योऽविनाशी, एकः स्वसमाभ्यधिकरहितश्चेतनश्चैतन्यविशिष्टो यः परमात्मा बहूनामितरेषां नानाभूतानां चेतनानां जीवानां कामान् तत्तत्कर्मानुगुणभोग्यपदार्थान् विदधाति उपस्थापयति, तं परमात्मानमात्मस्थं स्वास्मिन्नन्तर्यामितया वर्तमानं ये धीरा बुद्धिमन्त उपासनद्वारा अनुपश्यन्ति साक्षात्कुर्वन्ति तेषामेव कृतसाक्षात्काराणां शाश्वती शान्तिरात्यन्तिकदुःखनिवृत्तिरूपा भवति। नेतरेषामकृतपरमात्मदर्शनानां विषयाशावशीकृतमानसानां तु न सा शान्तिः किन्तु संसारानुवृत्तिरेव भवतीत्यर्थः॥

एवं यमेनोक्तं परमात्मस्वरूपं श्रुत्वा तत्साक्षात्कारोऽस्मादृशां संभवति न वेति शंकते—तत् यत् साक्षात्कारात् शाश्वतसुखप्राप्तिरभिहिता भगवता तदेव पूर्वमुक्तम्। परमं निरतिशयं सुखं यस्मिन्ननुभूते सर्वसुखानुभवो भवति तत् परममिति भावः। अनिर्देश्यमिदमिति निर्देशानर्हं तथापि एतत् करतलगतामलकवत् प्रत्यक्षमिति मन्यन्ते भवादृशा योगिनोऽहं तु न परिकलितयोगोऽतः तदनिर्देश्यं परमं सुखं ब्रह्म कथन्नु विजानीयां केन प्रकारेण साक्षात्कर्तुं शक्नुयां रूपादिरहिततया मादृशजनग्रहणानर्हत्वात् तद् ब्रह्म भाति किमु। सामान्यतया प्रकाशते किं येन मादृशोऽपि ज्ञातुं प्रभवेदिति तर्क उपपद्येत। अथवा तद् ब्रह्म विभाति विशेषेण भासते येन स्पष्टतया मादृशोऽपि विशेषेण साक्षात्कर्तुं पारयेदित्यर्थः। वाशब्दः विकल्पार्थकस्तेन न विभाति न विशेषतो भासत इत्यर्थो लभ्यते। अतो विशेषरूपेण भासते न वेति प्रश्नो निस्सरतीत्यर्थः॥१४॥

तत्र परब्रह्मणि भासमाने सति सूर्यो न भाति सूर्यप्रकाशापेक्षया परब्रह्मप्रकाशस्य अतिशयितत्वादभिभूतप्रकाशो भवति सूर्योऽतो न भाती-

**तमेव भान्तनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । १५॥**

त्यर्थः । न चन्द्रतारकम् चन्द्रश्च तारकाश्च चन्द्रतारकं समाहारद्वन्द्वे नपुं-सकत्वमेकवचनञ्च । चन्द्रस्य तारकाणाञ्च प्रकाशोऽपि अभिभूतो भवति । दृष्टं हि लोके समुत्कृष्टप्रकाशवत्सान्निध्येऽपकृष्टप्रकाशवतो दीपस्याप्रकाशमान-ताऽतः चन्द्रतारकमपि न प्रकाशते ब्रह्मणि प्रकाशमान इत्यर्थः । नेमा विद्युत इमा विशिष्टदीप्तिमत्तया दृश्यमाना विद्युतोऽपि न प्रकाशन्ते तस्मिन् प्रकाश-माने तासामपि तत्तेजोऽभिभवादेवेत्यर्थः । अयमग्निरल्पीयोदीप्तिमत्तयाऽस्मा-भिरनुभूयमानस्तु कुतो भायात् । ब्रह्मणि भासमाने नैव कथमपि भाया-दित्यर्थः । तमेव परमात्मानमेव सर्वान्तर्वर्त्तिनं भान्तं भासमानमनु पश्चाद् भाति प्रकाशते सर्वं सूर्यादिकम् । तस्यैव ब्रह्मण एव भासा याचितमण्ड-नन्यायेन ब्रह्मणः सकाशात् प्राप्तब्रह्मसम्बन्धिन्या भासा दीप्त्या सर्वमिदं सूर्यचन्द्रादिकं विभाति विस्पष्टं प्रकाशते । यद्वा तस्यैव भासा सूर्यादिगतया सर्वमिदं जगद् घटपटादिकं भाति प्रकाशितशरीरं भवति । सूर्यादिषु वर्तमाना दीप्तिस्तेषां स्वकीया न किन्तु परमात्मदत्तैव तया च सूर्यादय इदं सर्वं प्रकाशयन्तीत्यर्थः । एतेन परमात्मनः प्रकाशाश्रयत्वप्रतिपादनाद् रूपादिमत्त्वं स्पष्टीकृतम् "आदित्यवर्णं तमसः परस्तात्" श्वे॰ ३।८ इत्यादि श्रुतिषु तु प्रसिद्धमेव अतो रूपादिविहीनत्वान्मादृशजनग्रहणानर्हमिति शंका न कार्या त्वया । रूपादिविशिष्टश्च परमात्मा भाति विभाति च, अतो विभाति न वेति संशयोऽपि न कार्य इत्येवं शिष्यप्रश्नस्योत्तरं दत्तं यमेनेति भावः । परमात्मनः रूपवत्त्वे समुपबृंहणमाचार्यवचनमपि उदाहार्यं तद्यथाह च जगद्गुरुश्रीरामेश्वरानन्दाचार्यैः श्रीरामप्राप्तिपद्धतौ श्लो॰ ३८-३९

**अधःस्थिते वितानस्य तत्र सिंहासने वरे ।**
**आसीनं परमं रम्यं श्रीरामं सीतया सह ॥**
**दिव्यायुधान्वितञ्चाथ दिव्यपार्षदसंयुतम् ।**
**दिव्यभूषणवस्त्रञ्च भूषितं वीक्षते ह्यसौ ॥**

**इति भगवद्रामानन्दाचार्यप्रणीते कठोपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य द्वितीयावल्ली ॥२॥२॥**

—०—

## अथ द्वितीयाध्यायस्य तृतीयावल्ली

**ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ॥ तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥१॥**

**यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।**

ऊर्ध्वमूल ऊर्ध्वं सकललोकोपरि वर्तमाने सत्यलोके प्रतिष्ठितत्वाद्धिरण्यगर्भ एवोर्ध्वभूतस्तदेव मूलमादित्वादितरप्रपञ्चस्य प्रथमावयवो यस्य संसाररूपस्याश्वत्थस्य स ऊर्ध्वमूलो हिरण्यगर्भात्मकमूलावयवोऽवाच्योऽधोगताः पृथिव्यादिलोकप्रतिष्ठिता मनुष्यपशुपक्षिस्थावरात्मिकाः शाखाः शाखाख्यावयवाः सोऽवाक्शाखः प्रसृतत्वसाम्यान्मनुष्यपश्वादिषु शाखात्वोपचार एष दृश्यमानः सनातनोऽनादित्वाच्चिरकालीनः प्रवाहरूपेणायातीति सनातन उच्यते नत्वविनाश्यश्वत्थो वृक्षविशेषः श्वस्तिष्ठतीति श्वत्थः स न भवतीत्यश्वत्थः श्वो विनाशीत्यपरोऽर्थो बोध्यते तेन संसाराश्वत्थस्य श्वो विनाशिता प्रतिपादिता भवति । अयञ्चाश्वत्थो यतः परमकारणादभिन्ननिमित्तोपादानरूपाद् भवति तदेव शुक्रं विशुद्धं तद् ब्रह्म संसाराश्वत्थकारणमेव ब्रह्म तदेवाश्वत्थकारणममृतं निरुपाधिकामृतत्ववन्निरतिशय भोग्यं वोच्यते बोध्यते शास्त्रैः । तस्मिन्नेव परब्रह्मणि सर्वे लोकाः श्रिताः प्रतिष्ठिता भवन्ति उत्पत्यादिसमयेषु तदु तद् ब्रह्म कश्चन कोपि नात्येति नातिक्रामति एतद्वैतत् एतदेव संसाराश्वत्थनिदानमेव तत् पूर्वोक्तं विष्णोः परमं पदमित्यर्थः ॥१॥

इदं परिदृश्यमानं यत् किञ्च यत्किञ्चिदग्निवाय्वादित्यादिकं जगत् तत्सर्वं समस्तमेव जगन्निःसृतं प्राणादुत्पद्यमानं प्राण एवाभिन्ननिमित्तोपादानभूते परब्रह्मणि एजति कम्पते चलति प्राणपदवाच्यपरब्रह्मण एव निर्गतं तत्रैव स्वस्वव्यापारं कुरुत इत्येतत् । एतस्य जगत उत्पत्यादि कारणं तद् ब्रह्म महद् भयं बिभेत्यस्माज्जगदिति भयं भयजनकमित्यर्थः । तत्र हेतुमाह—वज्रमुद्यतम् । उद्यतं प्रहर्तुं सज्जीकृतं वज्रमेव तत् कश्चित् प्रहर्तुकामः स्वकरे वज्रमुद्यतं कुरुते तद्वा उद्यतं वज्रं यथा महद्

**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥२॥**

**भयादस्याग्निस्तपति भयात्तपति सूर्यः ।**

**भयादिन्द्रश्च प्राणश्च मृत्युर्धावति पञ्चमः ॥३॥**

**इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः । ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ।४॥**

**यथाऽऽदर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके ।**

भयजनकं तथा प्राणपदवाच्यं जगत्कारणं ब्रह्मापि महद्भयजनकमतस्तच्छाशनानुवर्तिनो भूत्वा वाय्वादयो नियमेन स्वस्वव्यापारपरा भवन्तीत्यर्थः । ये जना एतत् प्राणशब्दवाच्यमप्रमादेन स्वस्वव्यापारे प्रवर्तनाय जगतो भयजनकं ब्रह्म विदुर्जानन्ति तेऽमृता भवन्ति संसारान्मुच्यन्ते ॥२॥

पूर्वोक्तमेव विवृणुते, अस्य परब्रह्मणो भयात् तदुत्पादितभीत्या अग्निस्तपति दाहजनको भवति । अस्य भयात्सूर्यस्तपति प्रकाशते । अस्य भयादिन्द्रश्च वायुश्च पञ्चमो मृत्युश्च धावति स्वस्वव्यापारपरो भवति । इन्द्रवह्निसूर्यादीनामपि नियता स्वव्यापारप्रवृत्तिः परमात्मशासनातिक्रमे भयादेव धावतीति भावः ॥३॥

इह।अस्मिल्लोके शरीरस्य शीर्यमाणस्वभावस्य देहस्य विस्रसः पतनात् प्राक् पूर्वमेव जीवनकाल एवेत्येतद् । ब्रह्म बोद्धुं ज्ञातुं साक्षात्कर्तुमित्येतदशकदशक्नोत् चेद् यदि तदा संसारान्मुक्तो भवति । अशकदित्यत्र छान्दसः शप् भाव्यन्तु श्नुनेति बोध्यम् । न चेद् ब्रह्म बोद्धुमशकत् ततः तस्मादज्ञानादेव हेतोः सर्गेषु प्राणिसर्जनाधारेषु लोकेषु पृथिव्यादिषु शरीरत्वाय शरीरभावाय नरपशुपक्षिप्रभृतिशरीरग्रहणाय कल्पते तद्योग्यो भवति तस्मात् शरीरपातात्पूर्वमेव परमात्मज्ञानाय यतेतान्यथा जन्मजरामरणादिरूपः संसारावश्यंभावीति भाव ॥४॥

ननु कथमिहैव ब्रह्मज्ञानाय यत्न आस्थेयोऽन्यत्रापि देवादिलोके कृते यत्ने यदि परमात्मतत्वं विज्ञायेत स्यादेव मुक्तिर्यतः परमात्मसाक्षात्कारस्य मुक्तिहेतुता न लोकविशेषनियन्त्रितेत्याशंकायामाह–यथादर्शे इति । इहलोके शरीरापतात् प्रागेव यत्नाधाने तु कारणमिदमेव यदिह लोके आयमानं

**यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥**

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥**

परमात्मज्ञानं यथा विशदतरं भवति तथा नान्यलोकेष्विति तदेव दर्शयति—यथा आदर्शे तथात्मनि, आदर्शे दर्पणाख्यस्वच्छकाचविशेषे प्रतिबिम्बं मुखादि यथा सुविशदमलोक्यते तथैव । आत्मनि सुसंस्कृते मनसि परमात्मतत्त्वं सुविशदमुपलभ्यतेऽत्र लोके यदि तद् प्रयत्न आस्थीयते उपासनारूपः । लोकान्तरे तु न तथेत्याह—यथा स्वप्ने तथा पितृलोके । स्वप्नेस्वप्नदशायां यद् वस्तु प्रतीयते तच्च न सुविशदं स्वप्नप्रतीतेर्जाग्रत्प्रतीतिवत् संशयादिनिवर्तकत्वाभावात्, अतः स्वाप्नप्रत्ययो न स्फुटावभासो यथा तथैव पितृलोके जायमानपरमात्मप्रत्ययोऽपि न स्फुटावभासः । तत्र चेतसः कर्मफलभोगासक्तत्वाद् यतो हि स भोगभूमिलोकः । एवं गन्धर्वलोकेऽपि न स्फुटमवलोकयितुं शक्यते परमात्मतत्त्वमित्याह—यथाऽप्सु इति । अप्सु जलेषु स्वच्छेष्वपि यथा परिददृश इव परिदृष्टमिव भवति वस्तु तदन्तर्गतं वस्तुतो स्थले इव स्पष्टं परिदृष्टं भवति तथा गन्धर्वलोके ज्ञायमानमपि परमात्मतत्त्वं न स्पष्टं दृष्टं भवति तत्रापि चेतसो भोगाऽऽसक्तत्वादतो गन्धर्वलोकेऽपीह लोक इव स्फुटावभासोऽशक्य एव परमात्मनः । ब्रह्मलोके कीदृशं परमात्मदर्शनं भवतीत्याह—छायातपयोरिव ब्रह्मलोके हिरण्यगर्भलोके परमात्मतत्वं तदितरतत्वाद् विविच्य छायातपयोरिव परस्परमत्यन्तभिन्नं परमात्मतत्वं स्वेतरतत्वादिति ज्ञानं सुस्पष्टं भवति, यद्यपि तथापि स लोको न सुलभः । सर्वेषां येन तत्रैव गत्वा ज्ञानाय यत्नो नियम्येत, अत इहैव लोके शरीरपातात् प्राग् यतितव्यं मुमुक्षुभिरित्युपदिष्टम् ॥५॥

प्रकृतिविविक्तजीवात्मज्ञानानन्तरं परमात्मज्ञानस्य भावित्वाज् जीवात्मज्ञानं देहेन्द्रियविलक्षणतया कार्यं तथा करण एव परमात्मज्ञानद्वारा शोकनिवृत्तिसम्भव इत्यभिप्रायेणाह—इन्द्रियाणामिति । इन्द्रियाणामिति शरीरादे-

इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमम्। सत्वादधि-
महानात्मा मनसोऽव्यक्तमुत्तमम् ॥७॥

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यं

रण्युपलक्षणम्। प्रायशो लोका देहेन्द्रियाण्येवात्मतया प्रतिपद्यमाना भवन्ति, अहंस्थूलोऽहंकृशोऽहं काणोऽहं बधिर इत्याद्यनुभवात्, परन्त्वयमनुभव कार्यकारणरूपदेहेन्द्रियसंघाते आत्मत्वभ्रान्त्यैव भवति अत इन्द्रियाणां चक्षुरादीनां बाह्यानामान्तराणां च मन आदीनां पृथग्भाव जीवात्मापेक्षया स्वभावविलक्षणता विभिन्नतेत्येतत्। तं देहेन्द्रियवैलक्षण्यरूपं पृथग्भावं पृथक् स्वस्वकारणादुत्पद्यमानानां मत्वाऽत्मा भिन्नो भिन्नानि देहेन्द्रियाणि विज्ञाय धीरो बुद्धिमान् न शोचति न संसारदुःखमनुभवति। यदिति यौ इत्यर्थकम्। तथा यद् उदयास्तमयौ उत्पादविनाशौ तौ च जाग्रत्-स्वापादिदशासु इन्द्रियव्यापाराणामेव भवतोऽत इन्द्रियगतौ एव नात्मगतौ इत्येवं मत्वा धीरो न शोचतीत्यन्वयः। देहेन्द्रियगतमात्मवैलक्षण्यमात्मगतं देहेन्द्रियवैलक्षण्यं ज्ञात्वा उत्पादविनाशित्वमिन्द्रियाणामेव देहसहितानां नात्मन इत्येवं प्रकृतविविक्तात्मज्ञानी शोकभाग् न भवतीति भावः ॥६॥

एतदपि प्रकृतिविविक्तात्मज्ञानमिन्द्रियार्थादिपुरुषपर्यन्तवशीकारे सत्येव भवति नान्यथा अतः पूर्वोक्तं वशीकरणं पुनः पठति स्मृत्यर्थम्-इन्द्रियेभ्यश्चक्षुरादिभ्यः परं मनो वशीकार्यतायां तच्च मनोऽर्थेभ्योऽपि परमित्युपलक्षणतो ज्ञेयम्। "इन्द्रियेभ्यः परा अर्थाः अर्थेभ्यश्च परं मनः" इति पूर्वमुक्तत्वात्। मनसः सत्वमध्यवसायात्मकबुद्धिस्वरूपमुत्तमं प्रधानं वशीकार्यतायाम्। मनसस्तु परा बुद्धिरित्युक्तेः। सत्वादध्यवसायरूपादध्यधिकं प्रधानमित्येतत्। महानात्मा जीवात्मेत्यर्थः। महतो जीवात्मनोपेक्ष्याव्यक्तं सूक्ष्मपरिणामभूतं शरीरमुत्तमं वशीकरणे ॥७॥

अव्यक्तात् शरीरात्तु पुरुषः परमात्मा परः श्रेष्ठो वशीकृतौ, पुरुषमेव विशिनष्टि व्यापकः सकलचिदचिदन्तर्वहिस्थितोऽलिङ्गो लिङ्गागम्यः शब्दैकगम्य औपनिषदः पुरुष इत्यर्थः। यं परमपुरुषं सर्वव्यापकं मत्वा

**ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥८॥**

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥९॥**

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न**

उपासनद्वारा साक्षात्कृत्य जन्तुर्जीवो मुच्यते सर्वबन्धनविनिर्मुक्तो भवति । अमृतत्वं । स्वस्वरूपाविर्भावं मोक्षमित्येतद् । गच्छति प्राप्नोति ॥८॥

सम्प्रति परमपुरुषज्ञानाय साधनमुपदिशति—न संदृशे इति । अस्य परमात्मनो रूपं व्यापकीभूतमन्तर्यामिस्वरूपं अप्राकृतविग्रहो वा संदृशे दृष्टिपथे न तिष्ठति दर्शनगोचरो न भवतीत्यर्थः । ततो हेतोः न चक्षुषा-पश्यति कश्चनैनम् । चक्षुषः प्राकृतत्वेन कश्चिदपि देवो मनुष्यो वा ईदृशेन परमात्मानं द्रष्टुं नार्हति तस्यान्तर्यामिस्वरूपस्य व्यापकत्वाद् विग्रहस्य चा प्राकृतत्वात् । प्राकृतमिन्द्रियमप्राकृतग्रहणाऽसमर्थं भवतीतिभावः । तदाऽस्य-दर्शनसाधनं किमिति शंकायामाह—हृदेति । अत्र हृत्पदं हृदयस्थाया बुद्धेर्लक्षकं तथा च हृदा हृदयस्थया बुद्धया भक्तिरूपापन्नया हृदेत्यस्य विशेषणमाह-मनीषा । मन ईष्टे इति मनीट् तया संकल्पविकल्पात्मकस्य मनसो नियमनकर्त्र्येत्यर्थः । मनसा स्वनियन्त्रकभक्तिरूपापन्नबुद्धिकृतसंस्कारेण चेतसाऽभिक्लृप्तो ग्राह्यः साक्षात्कार्यः परमपुरुषो भवतीत्यर्थः । "मनसा तु विशुद्धेन" मनसैवेदमाप्तव्यमित्यादिश्रुतीनामिहैव स्वारस्यात् । ये एतद-परं ब्रह्म विदुरीदृशेन मनसा जानीयुस्ते उपासका अमृता भवन्ति ॥९॥

मनसस्तादृशबुद्धिकृतः संस्कारः कदा भवतीत्यत्राह—यदा पञ्चज्ञानानि ज्ञानसाधनानीन्द्रियाणि मनसा सह ब्रह्मण्येवावतिष्ठन्ते स्थिरीभवन्ति मनसि परमात्मप्रवणे स्वस्वविषयविनिवृत्तानीन्द्रियाणि तत्रैव सह मनसा धृतानि भवन्ति बुद्धिश्चाध्यवसायलक्षणा न विचेष्टेत व्यापाररहिताऽवतिष्ठेत् तामीदृशीं प्रसिद्धमिन्द्रियधारणामेव परमां गतिं गम्यतेऽनयेति

विचेष्टेत तामाहुः परमां गतिम् ॥१०॥

तं योगमिति मन्यन्ते स्थिरमिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाऽप्ययौ ॥११॥

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति-

तिर्गतिर्गमनसाधनं तस्याः परमत्वं मोक्षरूपोत्कृष्टफलसाधनत्वमेव । ईदृशीन्द्रियधारणैव मोक्षसाधनमित्याहुः परमात्मतत्वविदः ॥१०॥

तां पूर्वोक्तां स्थिरामचलामिन्द्रियाणां बाह्यानामान्तराणां च धारणां परमात्मप्रवणेन मनसा सहावस्थितिं स्वविषयव्यापारप्रतिबन्धिनीं योगं चित्तवृत्तिनिरोधरूपमित्याहुर्वदन्ति योगिनः । तदा तादृशयोगकाले तादृशेन्द्रियधारणावानप्रमत्तः प्रमादरहितो भवति । मनसोऽनवधानलक्षणः प्रमाद इन्द्रियधारणारूपयोगेनैव विनश्यतीत्यर्थः । तत्र हेतुमाह—योगो हि प्रभवाऽप्ययौ, प्रकर्षेण मनसो भवो भवनं वृत्तिः परमात्मप्रवणतयाऽवस्थानं योगः, अप्यय इन्द्रियाणां बुद्धेश्च व्यापाराभावः सोऽपि योगोऽतः प्रभवाप्ययौ योगो । हि प्रसिद्धौ । इन्द्रियाणां व्यापारनाशे तु प्रमादः कथं स्यादतस्तदाऽप्रमत्तो भवतीत्यर्थः । यद्वा प्रभव उत्पत्तिर्यस्यास्तीति प्रभवोऽप्ययो यस्याऽस्तीत्यप्ययः । प्रभवश्चाऽप्ययश्च प्रभवाऽप्ययौ, अर्श आद्यजन्तयोः प्रभवशब्दाऽप्ययशब्दयोर्द्वन्द्वः । तेन योगस्योत्पादापायशालित्वमुच्यते । प्रतिक्षणमुत्पादाप्ययशालिन्यपायो माभूदित्येतदर्थमवधानमावश्यकं तच्च प्रमादे सति न सम्भवतीत्यप्रमादो योगे परमावश्यक इत्यर्थः कार्यः ॥११॥

अयं परमात्मा वाचोपनिषद्भिन्नया वाण्या, मनसाऽसंस्कृतेन चेतसा चक्षुषा चक्षुरिन्द्रियेण प्राकृतेन नैव प्राप्तुमुपलब्धुं शक्यश्चक्षुषेतीन्द्रियान्तरस्याप्युपलक्षणं तर्हि कोपलब्धुं योग्य इत्यत्राह—अस्तीति ब्रुवतो ब्रह्मास्तीतिबोधयत औपनिषदाद्वाक्यादन्यत्र तद् ब्रह्म कथमुपलभ्यते न केनाऽपि प्रकारेणोपलब्धुं शक्यते तस्योपनिषत्प्रमाणैकगम्यत्वात् । एतेनात्र प्रमाणमेव नास्तीति शंकाऽपाकृता भवति । यो हि श्रुतिशिरसि नैव श्रद्दध्यात् तस्या-

ति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥१२॥

अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ॥१३॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१४॥

सुरप्रकृतेः परमात्मतत्वोपलब्धिर्मा भवतु वैदिकस्य तु सा स्यादवेतिभावः ।१२।

श्रुतिश्रद्धालुना स परमात्मा श्रुतिवाक्यात् प्रथमतोऽस्तीत्येव उपलब्धव्योऽस्तित्वेन रूपेण सामान्यतो निश्चेतव्यः तदनन्तरं तत्वभावेन तत्वं परब्रह्म तस्य भावोऽसाधारणो धर्मो जगत्कर्तृत्वादि सत्यं ज्ञानमनन्तमित्यत्र बोधितः सत्यत्वादिर्वा तेन रूपेण चोपलब्धव्यो ज्ञातव्यः । उभयोरस्तित्वतत्वभावयोर्मध्ये अस्तीत्येवोपलब्धस्य श्रुतिवाक्यात् प्रथमतोऽस्तित्वेन रूपेणोपलब्धिमत उपासकस्य तत्वभावः परमात्मनोऽसाधारणधर्मः सत्यत्वादिः प्रसीदति स्फुटमवभासते तेनासाधारणेन धर्मेण धर्मिपरमात्मस्वरूपं यथावत् प्रकाशते । धर्मस्य धर्मिसमानसंवित्संवेद्यत्वादिति भावः । यद्वा श्रुतिवाक्यतः परमस्तीत्युपलब्धव्यः । तत्वं भाव्यतेऽनेनेति तत्वभावो मनः तेनापि परमास्तीत्युपलब्धव्यः । उभयोरिति षष्ठी सम्बन्धसामान्ये तृतीयार्थे । तेन उभाभ्यां श्रुतिमनोभ्यां परमास्तीति उपलब्धस्य उपलब्धिमतः तत्वभावो मनः प्रसीदति निर्मलं भवति रागादिमलरहितं भवतीत्यर्थः ॥१३॥

ब्रह्मसाक्षात्कारस्य हृदयग्रन्थिविमोकद्वाराऽमृतत्वप्राप्तिसाधकत्वमाख्याति—यदा सर्वे इति । अस्य उपासकस्य हृदि अन्तःकरणे श्रिता वर्तमाना अनादिकालतः प्ररूढमूला ये कामाः शब्दादिविषयकरागादयः ते सर्वे यदा तत्वसाक्षात्कारोदये प्रमुच्यन्ते विलीयन्ते अथ सर्वकामविमोकानन्तरं मर्त्यं उपासको जीवोऽमृतो भवति संचितकर्मणां दग्धवीजभावादुत्तरेषां कर्मणाञ्चासंश्लेषात् संसारवीजरहितो भवति अत्र प्रबोधदशायामुपासनाकाले ब्रह्म परमात्मानं समश्नुते अनुभवति । शरीरेन्द्रियादिसम्बन्धवत्वकालेऽपि जीवस्योपासकस्य ब्रह्मानुभवो भवतीत्यर्थः ॥१४॥

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥१५॥
शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्नि-

पूर्वमन्त्रोक्तमेवार्थं पुनर्वदन्नुपसंहरति—यदा सर्वे इति । यदा प्रबोधानन्तरमुपासकस्य हृदयस्य हृदयगताः ग्रन्थयो ग्रन्थिवद्दुःखेन मोक्तुमर्हा रागादयो देहादिष्वात्माभिमानादयश्च ते सर्वे प्रभिद्यन्ते भेदनं गच्छन्ति । विनश्यन्तीत्येतत् । अथानन्तरमेवायमुपासको मर्त्योऽमृतो भवति । सवासनक्लेशनाशे जीवस्यामृतत्वं भवतीत्यर्थः । एतावदेव अनुशासनमेतन्मात्रमेव उपदेशः कर्तव्योऽस्ति गुरुणा शिष्यस्य कृते नातोधिकं किमपि उपदेष्टव्यमस्तीति भावः ॥१५॥

संप्रति मुच्यमानस्य विद्यावत उपासकस्य निष्क्रमणरीतिमुदाहरति—शतं चैकेति । हृदयस्य नाड्यो हृदयदेशगता नाड्यः शतमेका च सन्ति । एकाधिकशतसंख्यावत्यः प्रधाननाड्यो हृदयप्रदेशे सन्तीत्यर्थः । तासां नाडीनां मध्ये एका नाडी मूर्धानं मस्तकं भित्त्वा अभिनिःसृता निर्गता या सुषुम्नेति ब्रह्मनाडीति चोच्यते । तया ब्रह्मनाड्या मरणकाल ऊर्ध्वमुपरि आयन्नागच्छन् सूर्यरश्मिद्वारा अर्चिरादिमार्गेण भगवद्धाम साकेताख्यं गत्वा अमृतत्वं स्वस्वरूपाविर्भावपूर्वकश्रीरामाख्यपरब्रह्मानुभवमेति प्राप्नोति । अन्यास्तु शतसंख्याका नाड्यो विष्वङ् समन्तान्मुखनासाक्षिप्रभृतिद्वारेभ्य उत्क्रमणे जीवस्य निःसरणाय भवन्ति उपयुज्यन्ते । अन्यत उत्क्रमणे च सुरनरतिर्यगादिनानाप्रकारा गतयो भवन्ति । एतादृशमुत्क्रमणमविदुष एवेति भावः ॥१६॥

अङ्गुष्ठमात्रोऽङ्गुष्ठप्रमाणोऽन्तरात्माऽन्तर्यामी पुरुषः परमात्मा जनानां जनिमतां लोकानां हृदये हृदयप्रदेशे सदा सर्वकाले सन्निविष्टः प्रविश्यस्थितो वर्तते तमन्तरात्मानं परमात्मानमङ्गुष्ठप्रमाणकं स्वात् स्वकीयात् स्वकर्मोपार्जिताच्छरीरात् कायात् प्रवृहेत् पृथक् कुर्याद् विविच्य जानीयादित्येतत् । धैर्येण प्रमादरहितमनसा । तत्र दृष्टान्तमाह—मुञ्जादिवैषीकां मुंज-

विष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥ तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥

मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ।१८॥

सह नाववतु सह नौ भुनक्तु सह वीर्यंकरवावहै ।

स्तृणविशेषः तस्मात् तदन्तर्गतामिषीकामिव मुञ्जमध्यवर्तिसूक्ष्मशलाकामिवेत्यर्थः । शरीरे स्थूले वर्तमानो जीवात्मा तत्रापि सर्वान्तर्यामी परमात्मा अतः सर्वतः सूक्ष्मं परमात्मानं विविच्य प्रमादरहितचेतसा जानीयादिति भावः । तं सर्वान्तरात्मानं मुक्तं विशुद्धं निखिलहेयप्रत्यनीकं प्रकाशकममृतं निरुपाधिकामृतत्वशालिनं विद्याच्छुक्रममृतमिति । द्विरुक्तिरुपदेशसमाप्तिद्योतिका आदरातिशयद्योतिका वा बोध्या ॥१७॥

अथ यमोपदेशानन्तरं नाचिकेतो नचिकेता एवेति नाचिकेतो गौतमसुतो मृत्युप्रोक्तां यमेन समुपदिष्टामेतां प्रकृतामात्मविद्यां परमात्मस्वरूपबोधिकां विद्यां कृत्स्नं समग्रं योगविधिं "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेते"इत्यत्रोपदिष्टं लब्धा वरप्रदानान्मृत्योः सकाशात्प्राप्य ब्रह्मप्राप्तः परमात्मानमुपसम्पन्नः "परं ज्योतिरुपसम्पद्य स्वेन-रूपेणाभिनिष्पद्यते" इति श्रुत्यनुसारेण विरजो विमृत्युश्चाभूत् । अपहतपाप्मत्वादिगुणाष्टकाविर्भावविशिष्टोऽभूदित्यर्थः । अन्योऽपि यः कश्चिदध्यात्मविदात्मनि शरीरे इति अध्यात्ममं शरीरमध्ये वित् वेत्ति मुञ्जादिषीकामिव शरीरे वर्तमानं परमात्मानं शरीरात् पृथक्तया जानाति, यद्वा आत्मा जीवः तस्मिन्नित्यध्यात्मं जीवान्तर्वर्तिनं परमात्मानं योऽन्योपि वित् जीवात्मापेक्षया पृथग्भूतम् विविच्य जानातीत्यर्थः । सोऽपि एवमेव नचिकेता इव विरजो विमृत्युश्च भवति । आविर्भूतापहतपाप्मात्वादिगुणको भवति परं ब्रह्मोपसन्नः सन्नित्यर्थः । अनेन मंत्रेण प्रकृताया आख्यायिकाया उपसंहारो विद्यास्तुतये विहित इति बोध्यम् ।१८॥

विद्योपदेशे गुरोर्विद्याग्रहणे च शिष्यस्य यः शास्त्रविहितो नियमः प्रमादतस्तदुऽल्लंघननिमित्तदोषप्रशमाय शान्तिपाठः क्रियते--स हेति । हेति प्रसिद्धौ । स यः प्रसिद्धोपनिषत्सु स परमात्मा नौ आवां शिष्याचार्यौ

**तेजस्विनावधीतमस्तु मा विद्विषावहै ॥१९॥**
**ॐ शान्तिः शान्तिः शान्तिः ॥ इतिकठोपनिषत् ॥**

इत्येतत् । अवतु स्वस्वरूपप्रकाशद्वारा रक्षतु । ह प्रसिद्धः स परमेश्वरो नौ आवां भुनक्तु विद्याफलप्रकाशनद्वारा परिपालयतु । सह सममेव आवां वीर्यं विद्यासामर्थ्यं नियमपूर्वकविद्याग्रहणप्रदानाभ्यां सम्पादयावहै नियमोल्लंघने विद्यायाः सामर्थ्यस्य क्षतिसंभवात् । नौ आवाभ्यां यदधीतं तत् तेजस्वि वीर्यवत्तरमस्तु । आवां शिष्याचार्यौ मा विद्विषामहै—प्रमादकृतनियमोल्लंघनप्रयुक्तदोषनिमित्तकं विद्वेषं न करवाहै । यश्चाधर्मेण विब्रूते, यश्चाधर्मेण पृच्छति तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति, इति स्मरति मनुः नियमोल्लंघनं विद्वेषफलकम् । अधर्माध्ययनाध्यापनकृतो विद्वेषो नावयोर्भवत्वित्यर्थः । शान्तिः शान्तिः शान्तिरिति त्रिवारमुक्तिः सर्वदोषप्रशमनार्था इयन्तूपनिषत्समाप्तिद्योतनार्था मङ्गलार्थावेति ॥१९॥

**इति भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता कठोपनिषत् ।**

—०—

## जगद्गुरुश्रीमङ्गलाचार्यमहामुनीन्द्रप्रणीतो

# वेदान्तचिन्तामणिः

श्रीरामाद् विततां प्रणम्य हि निजामाचार्यसत्सन्ततिं
पीठाचार्यसुमङ्गलार्यकृतिना रामाय भक्त्याऽर्पितः ।
नानातर्कतमोविमूढमनसां वेदान्तबोधार्थिनां
सद्बोधाय महामहो वितनुतां वेदान्तचिन्तामणिः ॥१॥

शेषस्तनू रघुपतेरणुचेतनोंशश्चान्यो मतेर्हि करणाद् वपुषोऽप्यसुभ्यः ।
नित्योऽजडः परवशः कृतिभुक्तिशाली भिन्नोऽसुभृत् प्रतिवपुःसुखबुद्धिरूपः ॥

मुक्ताविमुक्तविधया द्विविधत्वमाप्ता जीवा मिथो जनकजापतितोऽपि भिन्नाः
मुक्ता अनन्तभजनाज्जनिमृत्युमुक्ता बद्धास्त्वनन्तजनिकर्मसुबन्धबद्धाः॥ ३॥

शुद्धाविशुद्धभिदया द्विविधं च सत्त्वं कालो मतिर्गतमतेरचितः प्रभेदाः ।
साकेतनित्यपरधामपदाभिधेयं सत्त्वं विशुद्धमजडं प्रकृतेर्विभिन्नम् ४॥

नित्याऽकृतिर्गुणवती प्रकृतिः परार्था तथ्या च मूलमहदादिकभेदभिन्ना ।
भूतादिकव्यवहृतेर्जनको हि कालो नित्यो विभुर्भुवननाथवपुर्जडश्च॥ ५॥

नित्या तथा सविषया जडताविहीना विभ्वीमतिर्मददयाप्रभृतिस्वरूपा ।
प्रामाण्यमत्र सुमतं स्वत एव चास्या याथार्थ्यकं विषयसत्यतया तथा च ॥

लोकैकहेतुरजडश्चिदचिद्विशिष्टः श्रेयोगुणैकजलधिर्हतदोषवृन्दः ।
सर्वेश्वरः क्षितिजया सह दिव्यदेहो ध्येयोऽमृताय सुजनैरिह जानकीशः ॥

सच्चित्सुखं च सुखिसृष्टिकरं परेशं व्यूहार्च्यमूर्त्तिविभवप्रभवं च हृत्स्थम् ।
रामं वदान्यविभुसर्वविदं भजध्वं हालाहलेन सदृशान् विषयान् विहाय ॥

वेदान्तवेद्यकरुणाकरनित्यबन्धोः सीतापतेः श्रितजनाहितनाशकर्त्तुः ।
भव्यां भवाब्धितरणे तरणिं प्रपत्तिं भक्तिं विना च मनुजो लभते न मुक्तिम् ॥

धूल्या मुनीन्द्रगृहिणीजडताऽपहर्त्तुर्ब्रह्मेश्वराद्यदितिनन्दनवन्दिताग्रात् ।
भागीरथीप्रभृतितीर्थगणैककन्दान्नान्या गतिः सुखदरामपदारविन्दात्॥

---

ankurnagpal108@gmail.com

३—श्रीरामानन्दग्रन्थमालायास्तृतीयं पुष्पम् ।

भगवच्छ्रीरामानन्दाचार्यप्रणीतानन्दभाष्योपेता

# ईशकेनकठप्रश्नमुण्डकमाण्डूक्य-तैत्तिरीयैतरेयोपनिषदः




**संशोधकः**—पण्डितसम्राट् स्वामी श्रीवैष्णवाचार्य
वेदान्तपीठाचार्य ( **अहमदाबाद** )

गुरुपूर्णिमा सन् १९६९ ई. } श्रीरामानन्दाब्द ६७० सर्वेऽधिकाराः स्वायत्तीकृताः { मूल्य ६/००

प्रकाशक :-श्रीरामानन्दवेदान्तप्रचारकसमिति अहमदाबाद

प्रथमावृत्ति-१००० प्रति

मूल्य-६/००

प्राप्तिस्थान-१-श्रीरामानन्दवेदान्तप्रचारकसमितिकार्यालय
अहमदाबाद

२-श्रीमोतीलाल बनारसीदास
चौक-वाराणसी

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ (સનાતનઃ)
જયતાઽજ્ઞાનકો નમો વેદવેદ્યો મહામતિઃ॥

ankurnagpal108@gmail.com

मुद्रक :—वैद्यराज स्वामी श्रीत्रिभुवनदासजी शास्त्री
श्रीरामानन्दप्रिन्टिंगप्रेस
कांकरियारोड-अहमदाबाद-२२